कला विधानदृष्ट्या न निर्दोष सिद्धयति। नाटकस्य वेणीसंयमनरूपा प्रधान-घटनास्मान भीम प्रतिज्ञया सार्धं निबध्नाति। पर नाटककारो न महाभारतस्य समस्तस्यापि कथावस्तुन समावेशनविषयक लोभ सवरीतु पारयति तस्मात् सोऽसम्बद्धा अपि घटना सयोजयितुमीहते। एष तदीयोऽभिनिवेश कथा गतिं प्रति बाधक सञ्जात। वीररसप्रधाने रूपके दुर्योधन भानुमत्यो प्रणयचित्रण नितान्तमनुपयुक्त वर्तते। काव्यप्रकाशकार साहित्यदर्पणकारश्चोभौ भृशमुपक्रोशन्तौ विलोक्येते प्रवृत्तिं ताम् प्रतीच्य प्रधी डॉ० कीथोऽपि न मङ्गता मन्यते। य खलु नाटकस्यास्य नायक दुर्योधन मन्यन्ते ते प्रणयचित्रणस्यास्यौचित्य प्रतिपादयन्ति। पर सत्यपि नायकत्वेन दुर्योधनेऽङ्गीकृते नेद प्रणयदृश्यमुचित प्रतिभाति। न तेन हि कथावस्तुनो गति प्रकर्षं वा प्रौढतामुपैति न च दुर्योध नस्यैव चरित्रमुच्छ्रितत्वमासादयति। एवमेव तृतीयाङ्कस्थित कर्णाश्वत्थाम्नोर्वाग्यु द्धमतितरा प्रभावपूर्णं सदपि न किमपि नाटकीय प्रयोजनमुद्दीपयति अतस्तदपि नापत्ताय कल्पते। अश्वत्थाम्न शस्त्रत्यागानन्तरमपि भीमकर्तृक दु शासन वधचित्रणेन तत्र च दु शासन रक्षणविषयिकायाश्चेष्टाया अश्वत्थाम्नो विरतत्वस्यास्यत्वेन न भीमस्य महत्तोपचयमृच्छति। अश्वत्थाम्नि दु शासन गोपायितु प्रक्रान्ते सति यदि भीमस्तदुरश्शोणितपाने साफल्यमध्यगमिष्यत् तदा भीमस्य गौरवमव र्धयिष्यत्। षष्ठे अङ्के चार्वाकराक्षसमवतार्य कथामावर्तयितु विधीयमान प्रयासोऽपि नापेक्ष्यते। तद्घटनायोजनया तु धीरोदात्तनायको युधिष्ठिर उपहास गमित इव प्रतीयते। तामवस्थां नीतस्य तस्य तात्कालिक चित्रण न कमपि प्रभाव जन यति। तत्स्वस्वाभाविकमेव प्रतिलक्ष्यते।

नाटकेऽस्मिन्नाटककारेण महाभारतीयानां बहूनां घटनानां समुपस्थाप नार्थमीहा तु कृतासीत् पर न स तासकलघटनामुक्ता एकस्मिन् सूत्रे प्रोतुमशक्त। न यावन्नाटकीया कथा विकास मनु धावेत् न च यावत् सा धारेव गतिशीला स्यात् तावन्नाटक कला न गरिमाण गन्तुमर्हति। नाटकऽनेनैतद्विधमपि वैशिष्ट्य नोपलभ्यते। नाटककारा वर्णनेन तु कथां विन्यास सलक्ष्यते पर स तत्र (कथायाम्) व्यापारेण गतिं प्रददान समवाप्यते। चतुर्थेऽङ्के सुन्दरककृत रणाङ्गनिवर्णनमस्ति तु कश्चिदकलित पर तद् कथावस्तुनो गतिं क्षपयति। अस्ति च तत् विगलितप्रभावम्। एवमेव भानुमतीकृत स्वप्नवर्णनमपि न तावन्त विस्तारमपेक्षते यावान् स तत्र वीक्षितो भवति। इत्थ वेणीसंहारस्य

निश्वनाथमतेनैताद्दशी योजना 'पताकास्थानकं तृतीय'मस्ति। अन्यत्रापि अहि-शतनकुलादिपदप्रयोगस्थले नाटककार कौतूहलोत्पादनस्य कृते प्रयतमानोऽवा-प्यते। वस्तुतो नाटकस्य कथावस्त्ववश्यमेव रुचिरं परं नाटकीया कला न तत्र समुचितां सज्जा श्रयन्ती दृग्गोचरीभवति।

नाटकस्यास्य नायको दुर्योधन इति केचन, तदपरे भीमो नायक इति, तदितरे नायको नाटकस्यास्य युधिष्ठिर इति मन्यन्ते। ये दुर्योधनं नायकं मन्यन्ते, तेषां कथनमेतत्—

(क) दुर्योधनस्य चरित्र-चित्रणे परिवर्तनं विशिष्टतया विधाय नाटक-कारस्तं (दुर्योधनम्) चारित्र्येणोच्चैरुत्थापयितुं यतमानो दृश्यते। इदं ज्ञाप-यति यत् कवेर्दुर्योधनस्य नायकत्वमभिलषितम्।

(ख) प्रथममङ्कं विहायावशिष्टेषु सर्वेष्वप्यङ्केषु दुर्योधनो रङ्गमञ्चे वीक्ष्यते। प्रथमेऽङ्केऽपि स. स्वकार्यकलापम्प्रति प्रेक्षकाणा दृष्टिमावर्जयन् विलोक्यते।

(ग) दुर्योधनगता शूरतास्मसम्मानभावना च तमस्मदादरभाजनतां प्रापयति। अस्ति स उद्भटो भटो विश्वसनीय सुहृत् स्नेहार्द्रश्च भ्राता। न स भीम इव विकत्थनाप्रिय.। तदीयानि दौर्बल्यानि अस्मदीया समवेदनां तदर्थं जागरयन्ति। मानवतायां स भीमान्महीयान्। स· पराजितोऽपि विजेतुर्भीमाद् गरीयान्।

(घ) नाटकीयं कथावस्तु दुर्योधनहेतोरेवातितरा मनोग्राहिणी हृदयाऽऽवर्ज-णकारिणी च।

नाटकस्य नायको भीम इत्येतन्मानिनां मतमेतत्—

आदिमादङ्कादन्तिमाङ्क यावद्—

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावविद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः॥"

इत्येतां प्रतिज्ञां बिभ्राणो भीम· सर्वत्र गर्जन् श्रूयते। द्वितीय-तृतीय-चतुर्थाङ्केषु स रङ्गमञ्चे नोपस्थितः प्राप्यते परं तदीयस्य कार्यभारस्य सूचनां प्रेक्षका सलभमाना उपलभ्यन्ते। द्वितीयस्मिन्नङ्के कञ्चुकी भीम मरुता रथकेतन-भङ्गस्य सूचनां प्रददाति। तृतीयस्मिन्नङ्के भीमस्यैषा गर्जना नेपथ्ये श्रुता भवति—

"कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥"

चतुर्थेऽङ्के सुन्दरको भीम-पराक्रममनुवर्णयन् प्राप्यते । इत्थं भीमो वेणीसंहारीय-कथावस्तुनो मूलाधार एव सिद्ध्यति । वेणीसंयमनाख्या घटनैव प्राधान्येन भीममवलम्बते । वेणी-संहारहेतोर्भीमस्य—

"मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥"

इत्येषा प्रतिज्ञैव वीजं प्रतीयते । भीम प्रतिज्ञामेतां पूरयितुमादितोऽन्तपर्यन्तं यतशीलः समासाद्यते । तत्कोपेन तु ज्ञातं भवतीदं यत् स आज्ञानवज्ञायापि स्वप्रतिज्ञा-पूरणाय समुद्यत आसीत् । चेन्नाटकाद् भीमस्य व्यक्तित्वं पृथक् कृतं स्यात् तदा तन्नावशिष्येत एव किम् ! नाटकस्य नामापि वस्तुनो भीमस्य प्राधान्यं साधयति । अतो भीम एव नाटकस्यास्य नायको मन्तव्यः ।

एतस्य नाटकस्य नायकत्वं हि युधिष्ठिरे समुद्घयतोऽपरेऽतद् अभिदधतां विचारा इमे—युधिष्ठिरो नायक-गुणान् निदधाति । स महासत्त्वो गम्भीरोऽविकत्थनः स्थिरो निगूढाहङ्कारो दृढव्रतोऽस्ति । सः सत्यं पातुं कुल-क्षयाशङ्कया शान्ति-प्रतिष्ठापनप्रयोजनेन युद्धाद् दूरीभवितुं सन्धिञ्च कर्तुं नितान्तमेव प्रयत्नं कृतवान् । शान्तिप्रियता तस्मिंस्तां सीमां गताऽऽसीद् यत् सा न तस्य भ्रातृभ्योऽरोचत । सः न कदापि मनागप्यविमृश्यकारितायां मतिं बबन्ध । नितरामयतत यद् दुर्योधनो नैजं दुरभिनिवेशं परित्यजेत्; कृतेऽपि महति प्रयासे यदा स (दुर्योधनः) कीदृशमपि सन्धिं कर्तुं नोद्यतः सञ्जातस्तदा बाधित एव भूत्वा युधिष्ठिरो युद्धमन्वमन्यत । आसीदसौ परमसौम्यः परमोदात्तस्वभाव औदार्यान्वितमानसः । रूपककारस्तस्य यं स्वरूपमस्फुरतो निदधाति तत्र सौम्यता तेजस्विता च इत्येते द्वे अपि विशिष्टे शोभेते—

"यद् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥"

अयोऽपि युधिष्ठिरस्य क्षमाशीलता श्लाघ्ने । तेऽपि विश्वसन्ति यद्युधिष्ठिरस्तेष्वपि न द्वैधधियं निदधाति। शालीनत्वात् सर्वशुभचिन्तनकारित्वात् तस्य, तेऽपि तस्मिन् श्रद्दधते । धृतराष्ट्रस्तमधिकृत्य वक्ति दुर्योधनमाश्वासयन्—"वत्स एव गतेऽपि मत्प्रार्थनया किम् करोति युधिष्ठिर ? अन्यच्च सर्वमेवापकृत नानुमन्यते ।' युधिष्ठिरस्य भ्रातृप्रेमास्त्यनुकरणीयम् । भीमस्यानृत-निधनवार्तामाकर्ण्य स स्वयमपि प्राणान् हातुं चितायां, सज्जायते सन्नद्ध । तस्य युद्धजनितजय पराजयरूपफलभोक्तृत्वादपि च नाटकान्ते "प्रीततरश्चेद् भगवांस्तदिदमस्त्वि' ति भरत वाक्याभिधानकारित्वात्, स एव नाटकस्यास्य नायक इति ।

नाटके यादृशमुज्ज्वलतर चरित्र नाटककारेण युधिष्ठिरे दर्शित न तादृश तत् स न भीमे न च दुर्योधने दर्शयन् समवाप्तो भवति तस्मात् कवरपि युधिष्ठिरस्य नायकत्वमिष्टमिति प्रतीयते ।

उदात्तचरित्रेषु पात्रेषु श्रीकृष्ण एव प्रामहर । नाटककारेण स भगवदवतारत्वेन चित्रितो न सामान्यपुरुषत्वेन । "प्रवेशकाले किल तत्र भगवत पाराशर्यनारदतुम्बुरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहितकाम्यया स्वयं प्रतिपन्नदौत्यस्य देवकीसूनो ' इत्यादिकै प्रथमाङ्के समुत्थापितैर्वाक्यैस्तस्य सर्वश्रेष्ठव्यक्तित्व नाटककार आलिखति । स दुर्योधनसभायां गत्वा दौत्यकर्म येन पाटवेनानुष्ठितवान् यां हि स राजनीतिकीमाश्चर्यकरी कुशलता दर्शितवान् तत् पाटव सा च कुशलता रूपककृता विलक्षणेनैव प्रकारेण प्रकटीकृतास्ति । दर्शको रङ्गमञ्चे तत् तत् कार्यं कर्तुं नोपस्थित पश्यति त पर तदीया मा सत्तापि पदीयस्कृता तत्पमञ्चे समुपतिष्ठते । स षष्ठेऽङ्क एव समुपस्थितो जायते नाटक कथाया । सूत्रधार स एव इत्येतत् सत्य कस्य न सचेतस पुर समुपस्थित भवति ? स एव युधिष्ठिरमभिषेक्तुं द्रौपद्या केशसंयमनोत्सवञ्चारचयितुमादिदेश । नाटकस्य समाप्तौ नाटककारस्तेनैव "तत् कथय महाराज, किम् स्मात् पर समीहित सम्पादयामि" इति व्याहारयति । एतत्सर्वमेव श्रीकृष्णस्यानन्यगामिनीं महत्तां ज्ञापयति । वस्तुत एव श्रीकृष्ण एव यन्माहात्म्येन यद्राजनीतिचातुर्येण यद्योकोत्तरप्रतापेन पाण्डवा स्वसाध्यस्य साधने तस्मिन्श्च महासमरे विजयश्रियमधिगन्तु प्राभूवन् यत्र द्रोणाचार्य भीष्मपितामह कर्णप्रभृतयोऽजय्यनिखिलविश्वसुविदितशौर्यास्तद्विपक्षे समतिष्ठन्त ।

पुरुषपात्रेषु कर्णोऽश्वत्थामा च प्रमुखपात्रे स्तः। अश्वत्थाम्नश्चरित्रे द्विधैते द्वे विशिष्टते वीरपुरुषत्वं पितृभक्तत्वं च। पितृनिधनोदन्तमाकर्ण्य सोऽतितरां दूयते। तदुद्रेकेनाहतो भूयावानिव रसोऽस्य यामभिव्यक्तिं विदधाति स, सा नितरामेवाभिनन्दनीया। तदीयप्रभावः सर्वत्राभिव्याप्तो भूत्वा विजृम्भते। सेनान्यत्वमुपाय समुपस्थितं प्रत्यूहविनाशय स यां प्रतिज्ञां परिगृह्णाति सापि नास्वाभाविकी। पर प्रतिज्ञाबद्धः स यदा शत्रोर्दुःशासनं रक्षितुं न शक्नोति तदा सा कृता प्रतिज्ञा तन्मानसेऽनुशयमुत्पादयति किञ्च कर्तव्यापूर्तिग्लानिम्। रूपककारस्तस्य वक्ष्यमाणामेतामवस्थामालिख्य तच्चरित्रमुदग्रतां प्रापयन् प्राप्तो भवति :—

"मरणादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे।
भीमाद् दुःशासनं त्रातुं त्यक्तमप्यस्त्रमायुधम्॥"

नाटके कर्णो महोदात्तवीराग्रणीत्वेन चित्रितः परं तदभिहितानि खलु "एवं किलास्याभिप्रायो यथाश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति। तस्याभावाद् वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान्। एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासंग्रामस्य राजकस्य परस्परक्षयमवेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता।" इत्येवमादीनि वचांसि तच्चरित्रमपकर्षं नयन्ति।

नारीपात्रेषु द्रौपदी भानुमती चेति मुख्ये। नाटकादौ द्रौपद्या वीरक्षत्रियाङ्गनात्वस्य परिचयः समवाप्यते। तस्याः क्रोधे वीरवंशोद्भूतायास्तनयायाः, वीरवंशस्य वीरस्नुषायास्तेजस्विता विद्युदिव परिस्फुरन्ती समवलोक्यते। "णाह, उदासीणेसु गुरुएसु मह मण्णु, ण उण कुविदेसु।" इत्यादीनि तस्या वचनानि कौरवकृतावमाननाजनितक्रोधानलज्वालया सन्तप्यमानं तस्या मानसमस्मत्पुरतः सन्निदधति। परमन्ततो गत्वा द्रौपद्याः कोपो नाटकीयकथावस्तुनो न बीजमिव प्रतिभाति। अवान्तरबीजत्वेनैव तस्याः क्रोधः प्रतीयते।

भानुमती नाटके पतिव्रतपरा नारी इव चित्रितास्ति। दृष्टादशुभात् स्वप्नात् तस्याः हृदयमत्यनिष्टाशङ्कि। सा सततं स्वभर्तृकल्याणकाङ्क्षयैवात्मानं कष्टे निपात्यापि व्रतं साधयति। "अज्जउत्त, जइवि एव्वं तहवि गुरुकिदपडिण्णाभागेहाणं क्खु मद्दाए"-इत्येतानि तदुक्तानि पदानि तस्या विवेकवत्तात्वं प्रथयन्ति। "स्त्रीभावेऽपि वर्तमाना वरं भवती पुनर्महाराज" इत्येतद् कञ्चुकिनोदीरितं वचो युगपदेव तद्गतानानेकान् गुणान् अभिव्यनक्ति।

नात्र सन्देहो भट्टनारायणेन पात्राणां चरित्रचित्रणे प्रशंसनीयं साफल्यं लब्धमस्ति तच्चित्रितेषु चरित्रेषु न क्वापि कृत्रिमत्वं दृश्यते। सर्वत्रैव तत्र स्वाभाविकत्वमुपलभ्यते। अत एव तु नाटकमेतच्चरित्रप्रधानेषु नाटकेषु गण्यते।

यद्यपि रूपके रसस्तृतीयतत्वेन मतस्तथापि तत्राभिनेयत्वस्य स्थानं प्रमुखम्। अतस्तत्सर्वमत्यतिशय्य सन्निष्ठते। वेणीसंहारनाटकमभिनयदृष्ट्या न सफलं नाटकम्। न केवलं तत्राभिनयनैपुण्यं कुशलत्वमपि तु तत्र कथावस्तवपि गतिशील न वीक्ष्यते। व्यापाराणां च संयोजनमपि न प्रशस्तम्। न तस्य दृश्यकाव्यत्व निकषे शुद्धं सिध्यति। रसपरिपाकदृष्ट्या तु नाटकमिदमेकं सफलं सुन्दरं प्रभावोत्पादकं नाटकं वर्तते। नाटकेऽत्र प्रधानो रसोऽस्ति वीरः। तस्य रसस्य प्रवाहः प्रथमाङ्कादेवानवच्छिन्नया गत्या प्रवहन्ननुभूयते। सः रसान्तराणाञ्च स्रोतांस्यात्मनि सन्निदधानो नाटकभूभागमाप्लावयन्नन्ते आनन्दे परिणमते।

वीरभावभावितस्य भीमस्य तु—

(क) "मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।"

(ख) "मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥"

(ग) "अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के।
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ॥"

इत्यादिका सुकला वीरोक्तयस्तु श्रावितं एव श्रुतिगता भवन्त्येव अन्येषामपि दुर्योधनाश्वत्थामप्रभृतीनां वीरपुङ्गवानामुक्तयो नितरां वीरभावमुत्पादयन्त्यो हृदये सञ्चारयन्ति सर्वेषामपि मानवानाम्।

द्वितीयस्मिन्नङ्के पार्थस्य जयद्रथवधप्रतिज्ञया भीतां जयद्रथमातरं दुःशलां सान्त्वयता दुर्योधनेन कृतं स्वचमूवर्णनं वीररसस्यातिमनोज्ञं निदर्शनमस्ति—

"कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः,
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुप्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलानां
माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोऽस्य सम्पतन्ति॥
स्वपितृनिधनवृत्तं निशम्याश्वत्थाम्नो हृदयं शोकसन्तप्तं शत्रुञ्च प्रति रुष्टञ्च

तद्विस्मयनप्रेरणया प्रेरितं च जायते । तत्तानीं भवति तन्मानसं वीरोत्साहवत् । तदुत्साहाभिव्यञ्जना विलोक्यतामस्मिन् श्लोके —

'पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृतं यद्रामेण श्रुतिमुपगतं तन्न भवता ।
किमद्याश्वत्थामा तदरिरुधिरासारविषमं
न कर्म ज्ञायान्ध प्रभवति विधातुं रणमुखे ॥"

अर्जुन वृषसेनयोर्मध्ये युद्धं यद् वर्णितं तदपि वर्तते महोत्साहसञ्चारकम् । अर्जुनस्य युद्ध-कौशलं विलोक्य को न भवत्युत्साहवान् ? यथा नाटके वीररसस्य परिपाकोऽवलोक्यते तथैव रौद्ररसस्यापि । भीमदुर्योधनयोः क्रोधोद्गारास्तु नाटके श्रूयन्त एव परं रौद्ररसपरिपूर्णमाणां गर्जनाश्च यतस्ततः आकर्ण्यन्ते । अश्वत्थाम्न एतस्मिन् वचने रौद्रस्य रसादो गृह्यताम् —

"यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥"

यद्यपि नाट्यशास्त्रीयनियमाश्च रङ्गमञ्चे युद्धदृश्यमुपस्थापयितुमनुमन्यन्ते परमत्र नाटके यत्र यत्र समरवृत्तं वर्णितं तत्र बीभत्सरसस्य सञ्चारः सर्वथैव दृग्गोचरी-भवति । दृश्यताम् —

"हदमणुस्समासोणिदहिं कुम्भसहस्सं वसाहिं संचिदम् ।
अणिस अ पिवामि सोणिअ वरिससदं समले हुवीअदु ॥"

यद्यपि नाटकस्य प्रधानवीररसात्मकनाटके वीर-रौद्र-बीभत्सरसानां प्राचुर्यमस्ति परं तत्र द्वितीयाङ्के शृङ्गाररसोऽपि आस्वाद्यते । भीमनिधनस्य वृत्तान्तं श्रुत्वा द्रौपदी-युधिष्ठिरयोः कृते करुणविलापे करुणरस आस्वाद्यतां याति ।

"आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थयः सात्त्विकाः ये ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥'

इत्यत्र दार्शनिकी भावना क्लिष्ट—

"दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ
कर्णस्यात्मजमग्रतः शमयतो भीतं जगत् फाल्गुनात्।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय॥"

इत्यत्र निराशाया वेदनाया आर्त्तरायाश्च कीदृशी क्रियती च प्रियाभिव्यक्तिः सञ्जातास्ति।

नाटकार्थं गृहीतं कथावस्तु यद्यपि प्रकृतिवर्णनाय नावसरं प्रददाति परं कविना तदर्थमवसरमधिगन्तुमीहा कृतैवास्ति। नाटकेऽत्र प्रकृतेर्मृदुलं भयङ्करञ्चोभयविधं दृश्यं चित्रयन् कविः प्राप्यते। प्रभातस्य मनोभिरामं दृश्यमीक्ष्यताम्—

"प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः।
अर्कांशुभिन्नमुकुलोदर-सान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति॥

प्रकृतेर्भीषणञ्च दृश्यं विलोक्यताम् —

'दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृण जटिल चलत् पांसुदण्डोऽन्तरिक्षे
झाङ्कारी शर्कराल पथिषु विटपिनां स्कन्धकाषैः सधूमः।
प्रासादानां निकुञ्जेष्वभिनव जलदोद्गार गम्भीर धीर
श्चण्डारम्भः समीरो वहति परिदिशं भीरु ! किं सम्भ्रमेण॥"

नाटके प्रधानरसानुरूपैव शैल्यपि शोभते। यादृशो रसस्तादृश्येव तत्र भाषा विभाति। यं रसं कविः प्रवाहयितुकामोऽस्ति तद्भावाविर्भावने तस्य भाषा सर्वथोपयुक्ता। भाषायां कवेरेकाधिकारः। वीररसवत्या रचनायां गौडी रीतिः समुचिता भवति। नाटकेऽस्मिन् वीररसप्रधाने सैव रीतिः परिस्पन्दते। गम्भीर-ध्वनिभूयिष्ठपदानि परिगृह्य समासान्तानि च पदानि प्रयुज्य कविना सर्वत्र ओजोगुणस्य सृष्टिः कृतास्ति। गौडीरीतिसमुल्लसिताया समासबहुलपदगुम्फिताया गम्भीराया ओजोगुणविभाविताया भाषायाः सद्भावात् वीरो रौद्रश्च द्वावपि रसौ नितरां विशदौ भूत्वास्मान समुपस्थापयितुं प्रभविष्णू सञ्जातौ स्तः। दृश्यकाव्ये एषा शैली यद्यपि न प्रिया मता परं रसपरिपाकस्तु तद्विधैनैव मार्गेण भवितुमर्हति। अतः काव्यरहस्या नु औचित्यायैव कल्पते स प्रकारः।

नाटकेऽस्मिन् अनुप्रासयमकादिशब्दालङ्काराणां प्रयोगस्त्वस्त्येव परम् 'आशस्त्रग्रहणात्-( २, ७ )' इत्यादौ विशेषोक्ति विभावनयोः, "विकिरधवलदीर्घान्त ( २, १६ )" इत्यादौ कारकदीपकस्य, "किं नो व्याप्तदिशाम् ( ३, १७ )" इत्यादावुपमारूपकयोः, "कुर्वन्त्वाप्ता हतानाम्" ( ५, ३६ )" इत्यादौ सहोक्तेः सौन्दर्यमेवमेवान्यत्रान्येषामप्यलङ्काराणां नाट्यालङ्काराणां च सुषमा कविना मा-दर्शितास्ति। अलङ्कारा इव नाटके अनेकेषां छन्दसां प्रयोगो दृश्यते। तत्र शौरसेनी मागधीप्रभृतिप्राकृतभाषाः अपि सम्यक् प्रयुक्ताः प्राप्यन्ते कथनस्य सारोऽयं नाटकमेतन्नाट्यकलादृष्ट्या यद्यपि नोत्तमं परं काव्यकलादृष्ट्योत्तममनपूर्वं विदुषां संसारे सम्मानं लभते।



# रत्नावली

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु सम्राजो हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति। तच्छ्रेष्ठताया कारणमिदमस्ति यत् तत्र तेषामुदाहरणानां सत्ताधिक्यतमा वर्तते यानि नाट्यशास्त्रं कस्यचन रूपकस्य विशिष्टताया प्रदर्शनाय अपेक्षते।

रत्नावली नाट्यकलादृष्ट्यैव नोत्तमा अपि तु सा दृश्यकाव्यदृष्ट्यापि एकाभिनन्दनीया कृतिर्वर्तते। नाटिकाकारेण तत्प्रणयने तदद्भुत कौशलमभ्युपागामि येन तत्र शास्त्रीयपद्धतिविषयकं सौन्दर्यं कलात्मकञ्च मृदुलं लालित्यमुभयमपि नितरां मनोऽभिरामं भूत्वाऽस्मानसुदस्थापयितुं क्षमे सञ्जाते स्त। कुशलकलाकारस्य तूलिका मनःप्रीतिकरैरङ्गैः वर्णैरालेख्यस्य रूपे नैसर्गिकीमाभां किरन्ती प्राणान् प्रवाहयति। न कलाकारः शास्त्रीयान् सिद्धान्तानुपेक्षते। स तेषु रमते। ते च तस्मिन् रमन्ते। कलाकारस्यैतद्धि निश्चितं वैशिष्ट्यं दृग्गोचरीभवति हर्षे, अत एव शास्त्रप्रतिपादितं सन्ध्यङ्गक्रमविधानं स रत्नावल्यां यथाविधि संरक्षन् समवाप्यते। मुखसन्धेर्द्वादशस्वङ्गेषु करणमेकादशमङ्गं वर्तते विलोभनञ्च चतुर्थं परं रत्नावल्यां प्रथमं करणमङ्कितम् —"नमस्ते भगवन् कुसुमायुध अमोघदर्शनो मे इदानीं त्वं भविष्यसि" इति। ततश्च तत्र विलोभनम् —

"अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
सम्प्रत्येष सरोरुहद्युतिमुषः पादास्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते॥' इति।

अत्र विलोभनं सहोद्भेदाभिधमपि सन्ध्यङ्गं विभाति। भवति कलाकारः स्वतन्त्रः। तत्र राजमाना स्वातन्त्र्यप्रियता वस्तुतः कलां धवलयति प्रसाधयति च ताम्। अयमाशय हर्षे कलाकारात्वमन्वर्थतां याति।

अर्थप्रकृतयः, कार्यावस्था, सन्धयश्च सन्ति वस्तुविकासस्य साधनानि। हर्षो रत्नावल्यां तत् तत्साधनानि सम्यक् प्रयुञ्जानः प्राप्यते। रत्नावल्या

कथावस्तुनः प्रधानं ध्येयमस्ति रत्नावल्युदयनयोरुद्वाहः । कविना विष्कम्भके यौगन्धरायणस्य—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

इत्येतयोक्त्या साध्यस्य बीजं स्पष्टमेव निर्दिष्टम् । पुनस्तदुपरितनश्लोकात्—

"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥"

इत्येतच्छ्लोकं यावद् बीजमेवोपस्थापयति कविः । यौगन्धरायणस्यैवोक्तिरेवारम्भावस्थां समुपस्थापयति । बीजाभिधाया अर्थप्रकृतेः आरम्भावस्थायाश्चान्वयो विधीयते मुखसन्धिनैव । अत्र च मुखसन्धावेव बीजस्योद्भव उद्देश्यानां संस्तवच्छन्दो माहृतादिकञ्च निरूप्यन्ते । एतेषां सद्भावो रत्नावल्याः प्रथमेऽङ्के विद्यते तस्मात् तत्र मुखसन्धिरेव परिस्फुरति ।

"सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुम् ।"

इत्यादिका वैतालीया गिरमाकर्ण्य सागरिका "कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा" "इत्यादिकं यदभिदधाति तत् तस्यामनसि प्रादुर्भूतं प्रेमाभिव्यनक्ति कथाविकासने च तज्ज्ञापने साहाय्यकृत् । कविरित्थमिह अर्थप्रकृतिं बिन्दुमुपक्षिपति । सागरिकोदयनमालिखितुं यद् यतते तदेव प्रयत्नाख्या कार्यावस्थास्ति बिन्दुप्रयत्नयोः संगतिः प्रतिमुखसन्धिलक्ष्ये भवति । रत्नावल्या द्वितीयाङ्के प्रतिमुखसन्धिरेवातो विद्यते । रत्नावल्या नाटिकात्वात् तत्र पताकाप्रकर्योः सन्निवेशो नारच्यत इत्येतद् विमृश्य न कविना ते प्रदर्शिते । ते विना साध्यफलादि नायकः समभ्युपैति तस्मात् तदनुपस्थापनं न कामपि हानिं जनयति । तृतीयाङ्के रत्नावली ( सागरिका ) वेषं परिवर्त्य राजानं संगन्तुमभिसरणोपायमवलम्बते परं न यतते स उपक्रमो निरापदः । वासवदत्ता तदुपायं व्याहन्तुं शक्नोति । भवति च स उपायो व्याहतः । राजा यद्यपि तत्राकस्मादेव सागरिकामवाप्नुते परं तदवाप्तिसमये "भो एवं क्खेदं जदि अआला वादावली सविअ ण आअदि देवीवासवदत्ता" इत्येतदभिधाय विदूषको हि वासवदत्ताया आगमनाशङ्कामुत्पादयति इत्येतद्विघाता स्थितेर्विद्यमानत्वात्, तृतीयाङ्के प्राप्त्याशाभिधावस्था भजते । तथाविधत्वात्, तत्र गर्भसन्धिः समुपतिष्ठते । "देवीसमाश्वासनं मुक्त्वा नान्यमत्रोपायं पश्यामि"…इत्यादिकानि वचनानि फलप्राप्तिं सङ्केत-

यन्ति । कविना नियताप्त्यवस्थामेव दर्शयितु हि तद्विषयक प्रक्रम समुपन्यस्त । चतुर्थेऽङ्के हि अग्निबाधा यावद् रत्नावल्या प्राप्ति सम्प्रयूहा प्रदर्शितास्ति परमन्ते तदवाप्त्यवसरो विघ्नविहीनश्च समुपस्थापित । एतत् सर्वं चतुर्थस्याङ्कस्यावमर्श-सन्धिमस्त प्रथयति । तस्मिन्नेव चतुर्थेऽङ्के सिंहलेश्वरस्य सचिवो वसुभूति साग रिका निर्वर्ण्य बाभ्रव्य "सदृशीय राजपुत्र्या बाभ्रव्य" इति यद् व्याहरति तस्य तद्व्याहरणान्निर्वहणसन्धि समारब्धो भवति। यौगन्धरायणकृत सर्वरहस्यो न्मीलने रत्नावली परिग्रहीतुमुदयनम्प्रति वासवदत्ताविहितेऽभ्यर्थने च फलावाप्ति स्फुटतयैव दर्शकाना समक्षेऽवतरति । अतश्चतुर्थोऽङ्क उपसहृतिसन्धि जुषते । कथावस्तुनि चमत्कारमवतारयितु नाटिकाकारेण पताकास्थानकानामपि प्रयो-गोऽस्ति कृत । धनञ्जयन अन्योक्तिरूप पताकास्थानकमथ च समासोक्तिरूप पताकास्थानकमित्यतद् द्वयमेव प्रतिपादितम् । कविनानयोर्द्वयोरपि सन्निवेशो विहित स्वरचनायाम् । "यातोऽस्मि पद्मनयने" इत्यादौ अन्योक्तिरूप पताका-स्थानक किञ्च "उद्दामोत्कलिका विपाण्डुररुचम्" इत्यादौ समासोक्तिरूपं पताका स्थानक शोभमान परयन्त्येव भावुका । इद सर्वं नाटिकाया अस्या शास्त्रीयप-द्धत्यनुगामित्व बोधयति ।

नाटिकाकार प्रस्तावनानन्तर विष्कम्भकद्वारेण नाटिकास्थाया कथाया पूर्व-वर्तिनोंऽशस्याभासमात्र प्रददाति । स च अशोऽयम्—'सिंहलेश्वरस्य सुतां रत्नावलीं य परिणे यति स चक्रवर्तित्वमवाप्स्यति' इत्येतज्ज्योतिर्विद्भ्यो कौशाम्बीश्वरस्यो-दयनस्य मन्त्री यौगन्धरायणो रत्नावलीमुदयनार्थं सिंहलेश्वर याचते पर सिंहलेश्वर उदयनस्य वासवदत्ताराज्ञीवत्त्वात् तस्य ता प्रार्थनां प्रत्यादिशति । ततो यौगन्ध-रायणो "लावाणके ग्रामेऽग्निना वासवदत्ताऽदह्यत"—इत्येतमनृतमुदन्त वितत्यो-दयनस्य कृत सिंहलेश्वराद् रत्नावल्या अधिगमनेऽधिगच्छति साफल्यम् । पर दैवाद् रत्नावलीवाही पोतोऽर्णवे निमज्जति । फलकेनैकेन सायात्रिका उद्धरन्ति-रत्नावलीम् । आनीता च सा यौगन्धरायणस्य सविधे भवति । यौगन्धरायणस्तां 'सागरिक'त्यतन्नाम्ना प्रत्याप्योदयनस्यावरोधे देव्या वासवदत्ताया सेवायां नियुनक्ति यतादयन स्यादावर्जितस्ता प्रति । रत्नावलीकथयैतदशानन्तर-मारब्धा भवति ।

नाटिकाया प्रथमऽङ्क मदनमहोत्सवस्य दर्शनीय दृश्य समुपस्थित भवति । सागरिका तस्मिन्नेव कमनीये सदवसरे उदयन दर्शनस्य समवाप्ते पुण्यमर्या

वेलामश्नुते प्रच्छन्नाया दशायाम्। तदुभयोः प्रणयबीजमुप्त्वा प्रथमोऽङ्को भवत्यवसितः।

द्वितीयस्मिन्नङ्के उदयनविरहतापतप्ता सागरिका स्वमनोविनोदनाय राजानमालिखन्ती वीक्ष्यते तत्सखी सुसङ्गतोदयनवियोगवह्निदह्यमाना तामुपचरन्ती समुपलक्ष्यते। राजा उदयनस्यापि एक पट्टे सागरिकाऽऽलिखितमस्ति, यत्र सुसङ्गतया सागरिकापि आलिखितास्ति, अवगच्छति। चित्रं वीक्ष्य नृपः सागरिकायामनुरज्यति। सुसङ्गतायाः प्रयत्नेन सागरिकोदयनयोः सान्निध्यमपि सञ्जायते। सर्वेगवशात् तच्चित्रं वासवदत्ताहस्तगतं भवति। नृपः चित्रं विलोक्य वासवदत्ता कुप्येदिति विचार्य चिन्तां प्रतिपद्यते—इत्यन्तरात्मिकं प्रदर्श्य द्वितीयाङ्कोऽपि सम्पूर्णतामुपैति।

सागरिकोदयनयोर्मेलनार्थं सुसङ्गता विदूषकायोजितयोजनाया वासवदत्ताऽवगतत्वात् सर्वमपि समीहितं वैयर्थ्यं याति। राजा वासवदत्तायाः पुरस्तात् भृशं निन्दति। राजानुनयति तां परं न तस्या रोषो दूरीभवति। यदैषा सर्वापि स्थितिः सागरिकामुपनिपात्यते तदा सात्यन्तं दुःखिता भवति च सा आत्मानं व्यापादयितुमुद्यता परं भगवदनुकम्पया न सा दुर्घटना भवितुं पारयति। वासवदत्ताकोप उभावपि सागरिकाविदूषकवसन्तकौ स्ववश्यतां नयति। राज्ञो वेदनां चिन्तां च वर्णयन्नङ्कस्तृतीयः समाप्तिमेति।

राज्ञी वासवदत्ता सागरिकां बन्दिनीं विधाय निगूहयति च क्वापि ताम्, अथ च प्रचारयति यत् सा उज्जयिनीं प्रस्थापिता। तदीया रत्नमाला कस्मैचन भूदेवाय देया स्यादित्येतत् तत्कृताकाङ्क्षा अस्त्यपि सुसङ्गता तां (रत्नमालाम्) विदूषकायैव प्रयच्छति। विदूषकस्तया रत्नमालया राजानं रञ्जयितुमीहते। इतो राजानं विजयवर्मा 'रुमण्वता मन्त्रिणा कोसलेषु विजयो लब्धः' इत्यनेन शुभेन वृत्तान्तेन प्रीणयति। एतस्मिन्नेवान्तराले काञ्चनमालाऽऽहूत कश्चन ऐन्द्रजालिकः स्वकीयेन्द्रजालविद्यया कौतुकं वितनोति। वासवदत्तासहितो नृपतिः यदा तत्कौतुकजनितमानन्दं गाहमानो राजभवनमध्यास्ते स्म तदैव बाभ्रव्यो नाम कञ्चुकी यो रत्नावल्याः सिंहलद्वीपं गतः अर्थात् द्वितीयः सिंहलेश्वरस्य मन्त्री वसुभूतिर्यौ रत्नावल्या साकमागच्छन्तौ पोतस्य निमग्नत्वाद्वियुक्ताहितोऽभूत्, आगतौ। तौ विदूषकस्य ग्रीवां सागरिकाया रत्नमालयाऽलङ्कृतां प्रेक्ष्य 'इयन्तु रत्नमाला रत्नावल्याः प्रतीयते' इति शङ्केते। वसुभूतिर्वासवदत्ता-

दहनमत्रविधिघटनोदन्तमारभ्य जलयान निमग्नता रत्नावलीप्रावनादिविषयक सकल नपि व्यतिकर श्रावयति राजानम्। राजापि यदा तत् सर्वं श्रृणवन्नासीत् तदैवान्तःपुरेऽग्निज्वाला प्रसरन्त्यो दृष्टा भवन्ति। विलोक्याग्निना दह्यमानमन्तःपुर वासवदत्ता भीता भवन्ती तत्र बन्दिनीत्वेन स्थिता सागरिकामपि पातु मोद्वेग नृप प्रार्थयते। राजाऽपि तत्क्षण सागरिकाजीवनरक्षार्थमग्नावेव प्रविशति। वासवदत्ता विदूषक वाभ्रव्य वसुभूतयश्च महीपमनुधावन्ति। पर सागरिकोद्धारेणैव सह अग्निरपि शान्त्यपकरमात्। वस्तुत स अग्निरैन्द्रजालिककौतुकमेवासीत्। नासीत् परमार्थतोऽग्नि। वसुभूति वाभ्रव्यौ 'सा सागरिका तु तत्त्वतो रत्नावली' चेति विज्ञाय नितरा प्रीयेते। तस्मिन्नेवावसरे यौगन्धरायण सर्वमपि रहस्यमुन्मीलयति। राजा सर्वमपि तन्निशम्य विस्मय हर्षञ्च विन्दति। वासवदत्ताया कृतेन भगिनयेनानुरोधेन च नृपो रत्नावलीं पत्नीत्वेन परिगृह्णाति— इत्थमत् सर्वमपि वस्तुजात निधाय भरतवाक्येन सह नाटिका भरतमुपगच्छति।

नि सशय नाटिकाया कथावस्तु नितान्त सुघटित सद् युक्तियुक्तया रीत्या विश्राममभ्युपैति। नाटिकाकारेण हर्षेण स्वकीयया निसितया प्रतिभया मनोभिरामया च कल्पनया तासां ललितललिततराणा घटनाना योजनापि विहिता या नैसर्गिकेन चमत्कारिता च परिष्वज्यमाना कथाया कामपि रुचिरा पूर्णां गति सञ्चारयन्ति। सारिकया सागरिका सुसङ्गतयोरालापस्य पुनरावर्तन यत् कविना कारित तेन च उदयनस्य स्वान्ते सागरिकापरकप्रेमाविर्भावनस्य या प्रभावपेशला कान्तभावनोद्भाविता तत् पुनरावर्तन सा च भावना भव्या नाटिकामतितरां गतिमतीं विदधाते। एवमेव नाटिकायां सागरिकाभिसारसम्बन्धिनी किञ्च तदभिसरणोद्भेदविषयिका च या घटना समुद्भ सति त द्वे अपि घटने हर्षस्य हृद्याया कल्पनाया परममञ्जलनिदर्शनत्वेन विभासते। ऐन्द्रजालिकयुक्तावना तु आनन्दपूर्णमद्भुत वातावरण सृजन्ती अनिर्वचनीयायामुद्भासवत्या भासुराया भूमिकाया नाटिका सवृणुते।

अस्या नाटिकाया नायक उदयनो धीरललितनायकः। तस्य चरित्रे विलासिता, प्रेमपरता, कलाप्रियता, प्रणयपरायणता च दृश्यन्ते। प्रकृत्यासित स शिष्ट सुकोमलश्च। परिजनेषु च सस्य सहृदयभावो विद्यते। यद्यपि नाटिकानियमया रतम्याम्नाटिकाकारेणोदयनस्य विलाससुललितं प्रणयप्रवणमेव रूप प्राधान्येन प्रदर्शित पर सापि घटना नाटिकायां कविना सङ्केतितास्ति यया तस्य राजनी-

निरिन्धनानलवत् विलक्षणं च शौर्यमनवगतं जायते । इदमपि स्पष्टं विदितं भवति यत् स प्रणयलोलुपो मधुरमधुरनर्मसु वेलासु विरहवेदनाकुलेषु क्षणेषु च न राजकार्येभ्यो भवत्युदासीनः । विजयवर्मणः कोशलविजयवृत्तान्तमाकर्ण्य स रुमण्वन्तं प्रति स्वकीयहार्दिकधन्यवादान् सहर्षं व्याहरन् कोशलनरेशस्य च शूरतां श्लाघते—"सखे कोशलपते साधु, मृत्युरपि ते श्लाघनीयो यस्य शत्रवोऽप्येवं पुरुषकारं वर्णयन्ति" इति । तदानन्तरेण सागरिकाऽऽनयनादिप्रसङ्गाद् यौगन्धरायणस्य शङ्कितहृदयता किञ्च 'कथमसौ मामनिवेद्य किञ्चित् करिष्यती'त्येतत् तद्वचनं तदीयं राजनीतिं प्रति सततं जागरूकत्वमभिव्यनक्ति ।

वसन्तकविदूषकस्य च चरित्रचित्रणे कविना श्लाघ्या सफलताधिगम्यते । तेन तेन पाटवेन तस्य चरित्रमालिखितं येन विदूषकापेक्षिताः सर्वेऽपि गुणाः लोचनगोचरतां गच्छेयुः । नर्मसचिवस्य दुर्वारहास्य-प्रमोदकुतूहल-मनोविनोदन-विचक्षणत्व-सुख-दुःखसहचरत्व-हास्यप्रवीणत्वादिसद्गुणाः कुशलेन कलाकारेण यथोचितेषु स्थलेषु अस्मत्समक्षे निधीयन्ते । राज्ञि विदूषकस्य प्रगाढभक्तिपरायणता च वर्तते । स नृपमानसप्रसादनाय वासवदत्ताप्रदत्तं निग्रहं ससुखं सहते, अनल-प्रविष्टे सति भूपतौ सोऽपि तमनुद्रवति । "भोदि सच्चं सच्चम् । सवामि बम्हसुत्तेण जइ ईदिसो कदावि अम्हेहि दिट्ठपुव्वो", किञ्च "सहत्थदिण्णेहिं मोदएहिं चिरस्स दाव कालस्स उदरं मे सुपूरिदं किदम्", अथच "भो वअस्स ण एदे महुअरा णेउरसद्दं अणुहरन्ति । णेउरसद्दो क्खु एसो देवीए परिअणस्स···" इत्यादिकतदुदीरितवाक्यैरप्यस्योपरिभणितानामनेकेषां गुणानां संस्तवः स्फुटतया समवाप्यते । 'द्विपदीखण्डं' स 'चर्चरी' इति निगद्य तु स्वविदूषकत्वं नितरामेव विवक्तं विधाय समुपन्यस्यति ।

रत्नावल्या मुग्धात्वं विभाति । उदयनस्य प्रथमसाक्षात्कारकाले सञ्जाता तद्दशा तस्या मुग्धतां व्यनक्ति—"एदं पेक्खिअ अतिसद्धसेण ण सक्कणोमि पदादो पदं विगन्तुम्" । तस्यामनिन्द्यं पुनीतमेव सौन्दर्यं समुत्तरलदवलोक्यते । नृपोदयनस्य हृदये न मात्रनरेन्द्रियेनदर्पमध्यवसितः प्रयत्नोऽपि तस्या अनुपमसुन्दरता प्रकटीकरोति । राजा—

"दृशः पृथुतरीकृता जितनिजाब्जपत्त्रत्विषः-
चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ॥

शिरांसि चलितानि विस्मयवशाद् ध्रुवं चेतसा
विधाय ललना जगत्त्रयललामभूतामिमाम् ॥"

इत्येषा तामधिकृत्योक्तिरपि तस्या अलौकिकसौन्दर्यवत्त्वं वेदयति। अस्ति सा कलापारगता सुन्दरी। चित्रकलायां सा नैपुण्यविशेषं निदधाति। सखिप्रकर्षात् प्रमादवती पुनः पुनस्तस्य सुसंगता। राजा तदालिखितचित्रं विलोक्य तस्यामनुरक्तः सञ्जायते। परिस्थितिवशात् सा भवस्यपि राजतनया दासीवोदयनान्तःपुरेऽहानि गमयति एतद्वेत्तोस्तस्या मनो न जातु ग्लानिमुपैति। तां दशां नीतापि सा स्वपितृकुलमर्यादारक्षायामस्ति सावधाना। यश पृष्टा सा सुसंगतया बाष्पार्द्रनयना भवति। तूष्णीं भूत्वैव सा स्वस्यां वशस्योदग्रतां च युगपदेव प्रकटीकुरुते। तादृशं तज्जीवनं न तस्यै रोचते क्षणमपि, परमुदयनगतं प्रेम जीवनं धारयितुं तां सनिर्बन्धमनुरुणद्धि। शंसति च सा—"ता परप्पेसणदूसिदं पि मे जीविदं एदस्स दंसणेण दाणिं बहुमदं संवुत्तम्"। नैजान्वयाभिमानशालिन्यां तस्यामात्मसम्मानभावना बलीयसी भूत्वा स्फुरति। सा अपमानं सहमाना न स्वजीवनं वोढुकामा। तद्भिसारगरहस्ये सति ज्ञाते वासवदत्तया सा अपमानाद् वरं मृत्युरिति विमृश्य लतापाशेनात्मानं जिघांसते। न तस्याः प्रेम औचित्यमतिक्रमते। सुसंगता तत्प्रेमैवमभिनन्दति—"न कमलाकरं वर्जयित्वा राजहंस्यन्यत्राभिरमते"।

अस्ति वासवदत्ता राज्ञ उदयनस्य प्रधानमहिषी। तस्स्पृहणीयप्रेमहेतोः राजोदयनः सर्वथा तदधीन एव। न कोऽपि क्षण एतादृक् यस्मिन् सा राज्ञः प्रेमपारावारे न निलीना प्राप्येत। तज्जीवनमेव तज्जीवनं सदानुकूल्यमेव तत्सद्भावस्तस्माद् राजा न कदापि तस्यां प्रमाद्यति। अत्र—

"प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ।
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥"

इत्येतदादिकं नृपवचः प्रमाणम्। वासवदत्ताया परमोदारहृदयता तस्याः पदममनस्कता च तदानितरामेव स्फुटतया प्रकाशमुपैति यदा राजप्रासादमभिगृहीतं प्राप्य सा मागधं बन्दिनीत्वं नीतां सागरिकामने पातुमवनीन्द्रं प्रार्थयत—'एसा क्खु मए णिहिदमणं इव णिअडेण सत्तमिदा णाअरिआ विवजादि। ता ण रक्खाअदु अज्जउत्ता"। परिसमनु तस्या दाक्षिण्य सदैवावलास्ति भवति। विदूषकं निगृह्णन्त्यपि सा सम्मानपुरस्सरं मोचयति।

सुखमनुभवन् वक्ति—( कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ) "अहो घन मेऽपगतोऽद्य सन्तापः । प्रिये, समाश्वसिहि, समाश्वसिहि",

"व्यक्तं लग्नोऽपि भवतीं न दहत्येव पावकः ।
यतः सन्तापमेतस्य स्पर्शस्ते हरति प्रिये ॥"

तदेव सम्भोगशृङ्गारस्य परिपाकः साधुसफलतया चोपपादितः । सागरिकोदयनयोः प्रेम विप्रलम्भशृङ्गारे पूर्वानुरागत्वेन समुपतिष्ठते । वियोगाग्निप्रज्वालिताया सागरिकाया वचांसि पदयन्त्यापि तन्मानसवेदनामुन्मीलयन्ति—"हद अ अदिनिसस जम्मदो पडुदि सर सबड्ढिद इम जण परिवड्ढअ दज्मेत्त दसण-परिचिद जण अणुगच्छन्तो ण लज्जसि ' " सागरिकाया वचस्येतस्मिन् उद्वग-प्रलापोन्मादव्याधिप्रभृतिविरहदशा व्यज्यन्ते । उदयनस्यापि विरहदशाभिव्यञ्जनं कविना कुशलतया कृतम्—

"बाणाः पञ्च मनोभवस्य नियतास्तेषामसङ्ख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत् त्वयि विप्रतीपमधुना यस्मादसङ्ख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥"

विरहे प्रियजनस्य वस्तु नितरां प्रेमोपायनपरस्य मानसं धिनोति—इत्येतत् तथ्यं च मालेयमुपायनीकरोति —

"कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयाऽनया ।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥"

तदेवं पक्षद्वयमपि परिपाकं गमितमिह ।

एतस्यां नाटिकायां शृङ्गारस्यास्वादोऽस्त्येव सर्वत्र परमन्येऽपि रसा अनेके तत्र तत्रास्वाद्यन्ते रसिकजनैः । सहृदयजगत्—

"अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणं
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्गमद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले
एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥"

इत्येतस्मिन् श्लोके वीररसमास्वादयति । तत्र चास्यां नाटिकायां भयानकरस-मास्वाद्यतां याति यत्र कपिरुन्मुक्तो भूत्वा सर्वत्र सम्भ्रमं वितनुते किञ्च यदासौ प्रासादे प्रसरति । तत्र करुणरसो रसिकान् परिप्रीणयत्युदेति यत्र वसुभूतितो

रत्नावल्याः सागरे निमग्नत्वं निशम्य मृदुलमानसा वासवदत्ता रोदितुमारभते । ऐन्द्रजालिकदर्शिते चमत्कारपूर्णे कौतुके कविनाद्भुतरसो विनिबद्धः । इत्थमस्यां नाटिकायां सत्यपि प्रधाने शृङ्गारे रसान्तराणामपि सफलाभिव्यञ्जना कविना कृतास्ति ।

हर्षः प्रकृतिप्रेमी प्रतीयते । अतएव नु तेनान्तःपुरप्रेमलीलां वर्णयतापि प्रकृतिवर्णनार्थमवसरोऽन्ततोगत्वा लब्ध एव । तेन प्रकृतिर्द्विविधरूपेण वर्ण्यते उद्दीपनरूपेणालङ्कारमार्गेण च । प्रस्तुते श्लोके प्रकृतेरुद्दीपकं रूपमन्तर्भावितम्—

"उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदं व्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसंगमधुना मत्ता इवामी द्रुमाः ॥"

समन्वयलङ्कारमुखेन प्रकृतेः श्रीर्निभालनीया—

"देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा त्वत्परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते कुसुमान्तरेषु शनकैः संजातलज्जा इव ॥"

कविः सूक्ष्मतयापि प्रकृतेर्निरीक्षणे पटीयान् । तदीयमिमं गुणं स्फुटयति श्लोकोऽयम् :—

"पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात् क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति ।
उपेत्य पीनत्वं तदनु भुवनस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥"

नाटिकायाः भाषा सरला अप्रतिहतप्रवाहा सुललिता च वर्तते । न तत्र दुरूहाणि पदानि सन्ति, न च समासबहुलता । सर्वथैव सा रसानुरूपास्ति । वाक्यानि न सन्ति तत्र दीर्घदीर्घतराणि । "कष्टोऽयं खलु भृत्यभावः"; "मनश्चलं प्रकृत्यैव" इत्यादिसूक्तिभिः समुल्लसति सा सूक्तिमत्त्वात् तत्रार्थे गम्भीरतापि समागतास्ति । तत्रत्य प्रसादो माधुर्यं च कालिदासं स्मारयति । नास्ति कवेः शैली भवभूति-

भट्टनारायणयो शैलीव कृत्रिमा। तस्य शैल्या विशिष्टतेय यत् तत्र चित्रात्मकाना ध्वन्यात्मकानाञ्च पदाना प्रयोगोऽभ्युपगत। मधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्युपेद्यते। कविना सापि स्वकृतावङ्गीकृतास्ति। कवेर्भाषाया वैशिष्ट्यमेतदपि वर्तते यत् तत्रालङ्कारा स्वाभाविकतयैव समागता सन्ति। तत्रोपमोत्प्रेक्षाप्रता पातिशयोक्तिविभावना-समासोक्त्यादीनामलङ्काराणा श्रीवृंदा सचेतसा चेतो हरति। शब्दालङ्कारेषु श्लेषोऽपि कवये रोचत। नाटिकाया नाट्यकलाया काव्य कलायाश्चोभयोर्मञ्जुलतया समन्वय सञ्जातोऽस्ति तस्माद्रत्नावली सर्वथैवैकान्य तमा सफला कृतिरिति शम्।



## शूद्रकस्तस्य मृच्छकटिकञ्च

संस्कृतसाहित्ये शूद्रकस्य यशः सर्वत्र प्रसृतं श्रूयते । सोमदेवस्य कथासरित्सागरे[1], दण्डिनो दशकुमारचरिते, बाणस्य हर्षचरिते, कादम्बर्यां[2] च, शिवदासस्य वेतालपञ्चविंशतिकायां, कल्हणस्य राजतरङ्गिण्यां, स्कन्दपुराणे[3] च व्यासस्य, सेनादित्येऽस्य वेदविदांवरस्य सिंहोरसावल्ल नृपस्य नाम सादरं कीर्त्यते । अन्ये[4] चानेके स्वस्वरचनासु अनवद्यं चरितं चरित्रं च चारुतयास्य चित्रयन्तः प्रेक्ष्यन्ते । मृच्छकटिकस्य आमुखे चास्य प्रशस्तिमीक्षामहे वयम् । नृपमणिं विदुषां गीतामेनद्वीर्यं प्रशस्यमानमधीत्य येनः स्वप्रशस्तिं प्रचयं प्रयाति सम्पूर्णममौ मेदिन्या प्रथितकीर्तिरद्भुतशक्ति-मति-मत्सरश्च त्रिवर्गमूर्धन्यो विशांपतिश्चक्रवर्ती बभूव । सत्यमपि तदीयायां कृत्यां विवादास्पदीभूतायामनन्त-सामयिकमुद्रितेतिहासप्रमाणाभावात्, तस्य बुधबहुलपरिगृहीतत्वात् नर्तितलोकस्वान्तत्वाच्च सोऽस्त्ययमेव कविस्तथापि सौभाग्यवशतेऽस्मि भुवनमिदं स्वगरिमा-नुबन्धस्य मूर्तेति निर्धार्यते ।

एतावत्कालपर्यन्तमपि निश्चयपूर्वकमेतन्नाभिधातुं पार्यते यच्छूद्रकः क आसीत् कस्मिंश्च काले इमां साहित्यवसुन्धरां शोभयामास । विद्वद्वरेण्य श्रीचन्द्रबली[5] पाण्डेय आह यद् वासिष्ठीपुत्र पुलुमाविरेव

---

[1] तस्माच्च शूद्रकाख्योऽभूद् भूपतिः प्राज्यविक्रमः ।

( कथासरित्सागरे ११वे तरङ्गे, पृ० ४१४ )

[2] 'राजा शूद्रको नाम' ( कादम्बर्याम्, पृ० ९, नि० प्रे० )

[3] स्कन्दपुराणे, कुमारिकाखण्डे ।

( शूद्रकः कलिवर्षेषु ३२९० वर्षेष्वतीतेषु सम्बभूव )

[4] ( अ ) राजशेखरस्य हेमचन्द्र-धनिक-सौमिल्लकृता शूद्रककथा ।

( आ ) भोजकीर्तिनामधेया पञ्चशिखप्रणीता प्राकृतकाव्यरूपा शूद्रककथा ।

( इ ) भोजेनाभिनवपुत्रेण चानुस्मृतं विक्रान्तशूद्रकं नाम नाटकम् ।

( ई ) काव्यादर्शटीकाया वादिवेतालेनोल्लिखितं शूद्रकचरितम् ।

[5] श्रीचन्द्रबली पाण्डेयः शूद्रक, पृ० ३८ ।

शूद्रक आसीत्। डॉ० स्मिथ[1] आन्ध्रवंशसम्भव सिमुकमेव शूद्रकं निर्धारयति। प्रो० स्टेनकोनो क्वते यत् २४८तमे खैस्ताब्दे सम्भूत शिवदत्ताख्य चिरौदा एव शूद्रक आसीत्। दशकुमारचरितरचयिता दण्डी एव शूद्रक इति [2]श्रीपिशेलोऽनुमिमीते। काश्चन इस्तलिपय[3]स्तु वदन्ति यच्छालिवाहननृपतेर्मन्त्री एव शूद्रक इत्येतां संज्ञां जुजुषे। स एव, गच्छतान्हेसा, प्रतिष्ठानस्य नृपतिर्जज्ञे। इत्थं शूद्रकीयव्यक्तित्वमधिकृत्य महान् विवादः श्रूयते यथा, तथैव तस्य समयमुद्दिश्यापि सन्ति नैका उहा.।

कवि करट्ट शूद्रकं विक्रमादित्यात् प्राग्भवमवगच्छति, परं दत्तहणाभिमत कतमोऽय विक्रमादित्य इति न स्पष्टम्। चेद्रय स विक्रमादित्यो यो डॉ० राजबलीपाण्डेयकृतानुसन्धानानुसार कालिदासस्याश्रयदाता मालवगणप्रमुखो विक्रमसंवत्सरप्रवर्तकस्तदा शूद्रक ईशवीयाब्दप्रवर्तककालात् प्रागुवर्ती सिद्ध्यति। यदि डॉ०स्मिथ विचारोपरि ध्यानं प्रदीयते तदेन्द्रशूद्रकसमयः चिर प्रतिभाति यद्सावीशवीयाब्दात् प्राग् गामिन्या तृतीयस्या शताब्द्यां समभवत्। मार्कसेनाख्यप्रतीच्यपण्डितप्रणीतभारतेतिहासानुसारं मगधराज्य शिवस्वातिनामा राजमन्त्री १९१तमेशवीयेऽब्दे राज्यं स्यापादित इत्येतेन शूद्रक ईशवीयद्वितीयशताब्दां वभूवेति ज्ञायते। डॉ० फ्लीटे विमृश्यति यच्छूद्रकसुनुरीश्वरसेन आन्ध्रान् पराभूय २४८–४९तमेशवीयाब्दे चेदिसंवत्सरं प्रावर्तयत् इत्येतेन तदीया विद्यमानता तृतीयशतकयामिनी निष्पद्यते। स्कन्दपुराणोक्ति यदि श्रद्धा निधीयते तदा स महस्रैकतमेशवीयाब्दात्पूर्वमस्यैव वर्तितो जायते यतो हि पुराणाना[4] रचनोपरिनिदिष्टेश्वीय शतक यावदेव समपद्यते। अवन्तिसुन्दरीकथाया वर्णितस्य शिवस्वातिमहीपस्य समयेऽयमभ्दीति केषाञ्चन कोविदाना मतमित्थमेव एकाशीतितमे खैस्ताब्दाब्दयर्गेऽजनिष्टेति प्रमाणीभवति। (परं पुराणोत्पत्तिमाश्रित्य तु शिवस्वाते काल खैस्ताब्दमारभ्यहिनि चतुर्थे पञ्चमे वा शतके निर्णीयते) श्रीजैकोबीमहाभागस्तु माह यत् स खैस्तचतुर्थशतकात प्राक्तन।

[1] स्टेनोकोनो इण्डियन ड्रामा पृ० ५७।

[2] ए० ए० मेकडानल, ए हिस्ट्री ऑफ स० लि० पृ० ३६१।

[3] हिन्दी विश्वभारती, पृ० २८९९।

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, स० ३, परि० १५, पृ० २९८।

स्पष्टमेव दर्शितमाप्यते। अतो निश्चयोऽयं भवति यत् शूद्रकः सातवाहनयुगे—ईशवीयद्वितीयशतकस्याद्योरित् तृतीयस्यान्तरा ऽ स्मन्जूव।

मृच्छकटिकस्य कर्तृत्वमधिकृत्यापि तर्काः श्रूयन्तेऽनेके। विदुषां मध्ये बहवो मृच्छकटिके शूद्रककर्तृकत्वमभ्युपयन्तु नोद्युक्ता दृश्यन्ते। श्री डॉ० पिशेलो[1] नाम प्रधी मृच्छकटिकस्य कर्ता दण्डीति मन्यते। श्री डॉ० सिल्वां लेवी[2] च मृच्छकटिकं न शूद्रकस्य कृतिं मनुते। तन्मतेन कश्चिदन्य एव कवि शूद्रकनाम्ना तत्प्रकरणं प्रणयामास। श्री डॉ० कीथोऽपि[3] मृच्छकटिकं शूद्रकप्रणीतं नाङ्ग-करोति। तद्विचारानुसारं कश्चित् कविर्भासकृते चारुदत्तनाटके आर्यकविद्रोहकथां समावेश्य विस्तार्य च तन्मृच्छकटिकनाम्ना स्थापयामास। तदेवं मृच्छकटिकस्य कर्तरि नानाविवादा श्रूयन्ते।

यत् पूर्वमुक्तं सिमुकः शूद्रको, वा शिवदत्तः शूद्रको, वा पुलुमावी शूद्रक इत्यादि तद् यदि सत्यत्वेन सम्भाव्यमस्ति तदा लोकाद् परम्परात समागता जनश्रुति अपि—गदितथो भवितु शक्य। पौराणिकमाख्यानमपि कस्याधारमे-वाश्रय समुत्थि। प्रचलितं च जायते। पश्चिमसाहित्यालोचकाः साहित्य सहर्तु शक्नुवन्ति यद् वा कश्चिज्जन कस्याञ्चन मौहित्यमासाद्यान्यत् किमपि अयथार्थं तत्र प्रभवत्यन्तर्भावयितु परं कोऽपि कस्यचन देशस्य जनताया मध्ये प्रचलिता दन्तकथा अमयितु एवं न कदापि शक्नोति इत्येतस्मात् कारणाद्ध च धीय विशाला साम्राज्यस्मात् कस्मिन्नपि काले कवापि विपुलविद्या गुण-वद भाज समस्यसनिनो ददविद्वेष्यस्य तयं धनस्य शूद्रकस्य भूपते समुत्पत्ति-रपि सम्भवा। तेषु तेषु ग्रन्थेषु तस्य चर्चा या कृताऽस्यते न सा सर्वथैवालीकैव सम्भवा। परमेतेनेदं न वेद्य यद् ये सज्जनास्तत्र तत्र गते शूद्रकस्य तर्कयन्ति तेषां तर्कैण प्रत्यायपायते। भारतीय पुरातनतः यत् साहित्यमिदानीमुपलभ्यते तत्र मूलं कालप्रभावात् प्रमादात् स्वकीये शुद्धे रूपेऽवस्थितं सदास्मान स्थापयितु न शशाक, अतः निश्चयतया किमपि सदीयं प्रमाणमन्तरेण न वक्तुं शक्यते। तस्मान्मृच्छकटिकस्य कर्ता शूद्रक एव प्रतीयते। यदा हि वामनाचार्यो तेजराख्या-

---

[1] मकडानल ए हिस्ट्री ऑफ संस्कृत लि० पृ० ३६१।

[2] लीथियेटर इण्डियन १८९०, पेरिस।

[3] डॉ० कीथ संस्कृतड्रामा, पृ० १२८–१२६।

इत्यादावथ च दशमेऽङ्के—

> उत्तिष्ठ भो ! पतित-साधुजनानुकम्पिन्
>
> निष्कारणोपगतबान्धव ! धर्मशील ! ।
>
> यत्र कृतोऽपि सुमहान् मम मोक्षणाय
>
> दैवं न सज्जति किं न कृतं त्वयाद्य ॥ १०।३१

रोह०—अले चाण्डाल । मं मालेध, गुच्छध आवुकं । किं मए गदेण कादव्वं ? इत्यादिषु च करुणरससागर उच्चैस्तरलीभवन् केन न दृश्यते ? कस्य न हृदयं शोकेनाप्लावितं सञ्जायते, को न क्रन्दन् श्रुतो भवति । अष्टमेऽङ्के—'चिट्ठ ले दुट्ठसमणश ! चिट्ठ' इत्यादीनि वाक्यानि भयमुत्पादयन्ति, "अज्ज पि दे हिअअगद् तुम च दाव ज्जेव मोडेमि" इत्यादिवाक्यानि च बीभत्सं जनयन्ति केन नानुभूयन्ते ? किञ्च चतुर्थेऽङ्के—"एसा उण का ? फुल्लपावारअ-पाउदा उवाणह-जुअलणिक्खित्त-तेल्ल-चिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि" ."'"अहो ! से अपच्छिमदाइणीए पोट्टविस्थारो । ता किं एदं पविसिअ महादेवं चित्त दुआरमोहाढा घरे णिम्मिदा ?" इत्यादीनि विदूषकवचांसि भृशं हृदये हास्यानन्दं सञ्चारयन्ति सज्जनान् नितरां रञ्जयन्ति । शर्विलकार्यकयोश्चरित्र्य क्वचित् क्वचिद् वीररसस्याभा सम्यग् वर्धन्ती प्रतिलक्षिता भवति । चिन्ता-निर्वेदग्लानिप्रभृतिसञ्चारिभावा यथावसरं रसिकेभ्यः रसं सेना रामर्पयन्तः समवाप्यन्ते । एतेन विवेचनेन शूद्रकस्य कविप्रतिभास्त्व साधु विदितं जायते । नदं यदेतस्माद् गुणात् तस्य रचनाया कमनीयमेव रसव्यञ्जकत्वं प्रस्फुरति ।

कविर्यदपि वर्णयति तस्य दृश्य समक्षे साक्षात् भवत् समुपतिष्ठते । यदाथा—

> "दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
>
> सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
>
> सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
>
> पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥" १।३६

इत्यादिना दारिद्र्य,

> "चिन्तासक्त निमग्न मन्त्रि सलिलं दूतोर्मिशङ्खाकुलं
>
> पर्यन्त स्थित-चार नक्र मकरं नागाश्वहिंस्राश्रयम् ।
>
> नानावाशक-कङ्क-पक्षिरुचिरं कायस्थ-सर्पास्पदं
>
> नीतिक्षुण्णतटञ्च राजकरणं हिंस्रैः समुद्रायते ॥" ९, १४

इत्यादिना राजाधिकरणं,—

> "महावाताध्मातैर्महिषकुलनीलैर्जलधरै-
> श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्तः प्रचलितैः ।
> इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती
> धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥" ५, १२

इत्यादिना च वर्षां वर्णयितुमुपक्रमते स्म। तत्तद्वस्तुनां दृश्यं पाठकस्तदनुभूतिं प्रतिमामाश्वादयन् पश्यति ।

यन्मृच्छकटिकमुत्तमां कोटिं नयति तदस्ति तस्य कथावस्तु। तदीया कथा-नितरामेव प्रस्फुरन्ती घटनाचक्रेण पूर्णतामगमत्। अत एव प्रकरणमिदं नितरां लोकप्रियतामुपेतमस्ति। प्रकरणस्यास्य प्रशंसनीया विशिष्टतेयमपि विज्ञायते, यत् तत् समसामयिकों देशस्यावस्थां परि सम्यक् प्रकाशं क्षिपति। तद्वलोक्य ज्ञायते इदं यत् तदानीन्तनेऽपि युगे समाजे ब्राह्मणानां महत् सम्मानमासीत्। 'विषयिशेपाल्ड्कृतः किं कोऽपि ब्राह्मणः काम्यते,' 'पूजनीयो मे ब्राह्मणजनः' इत्यादिपङ्क्तिभिर्ब्राह्मणानां विद्याव्यसनमथ च तेषां समाजे प्रतिष्ठितत्वं ज्ञानं जायते। परं ते नानादुष्कर्मस्वपि निरता अदृश्यन्त-उत्पन्न प्रमाणं शर्विलकोऽस्ति। तेऽध्ययनाध्यापनादि स्वकर्म विहाय व्यापारादिकमप्याचरन्ति स्मेत्यत्र तु चारुदत्त एव निदर्शनम्। स सार्थवाह आसीदिति स्पष्टतया लिख्यत एव। जातिवादस्तदा प्रचलितर आसीदिति 'अरे! तुमं पि को'? 'अरे दा ण जादी?' इत्यादिकानि वाक्यानि स्पष्टमेव तथ्यमिदं निदर्शति। नगरे तन्तु-वृत्तिकादीनां पृथक् पृथक् वसतय आसन्। द्वितीयाङ्के चारुदत्तस्य स्वस्य प्रदानं संवाहकः कथयति—'स खलु श्रेष्ठिचत्वरे प्रतिवसति। नगराणि राजमार्गं सुशोभितान्यभासन्त[1] स्वयम्। गणिकामपि व्यवस्थापयत्। परं रात्रौ दीपस्तम्भानां सम्यक् प्रबन्धो नासीत् अतो राजमार्गा अपि अन्धकाराक्रान्ता अदृश्यन्त। तमसि विट-चेटादयो भ्रमन्त समचरन्। रात्रौ मार्गोऽस्तमापन्नस्मार्गत्वेप दायपे निर्भयं जना' कलहायन्तो मिथः प्रताड्यन्त प्रायेणावाप्यन्त। यानार्थं प्रवहणविकारादिकं[2] प्रयुज्यन्त। धनवन्तो वाहनत्वेन गजानपि[3] प्रायुञ्जत

---

[1] प्रथमोऽङ्कः। [2] 'पवहण विट्ठदि' अं० ६।

[3] अज्ज आए गन्धगज-अं०-२।

पत्नीत्वेन सवर्णा स्त्री पर्यगृह्यत परमसवर्णाया ग्रहणमपि प्रतिषिद्धं नासीत्। ब्राह्मणा कस्यापि वर्णस्य नारीं परिगृह्णन्तश्च अदृश्यन्त। सतीप्रथायाः[1] अपि प्रचार आसीत्। समाजे द्यूतस्य प्रचलनं, दास-प्रथा वेश्यापरता च अदृश्यन्त। 'द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्', 'सुवृत्त, अदासो भवतु', 'दरिद्र-पुरुषसङ्क्रान्तमना: खलु गणिका लोके अवचनीया भवती'त्यादीनि वचांस्यत्र प्रमाणम्। तस्मिन् काले कलानामप्यवस्थायुन्नतासीत्। जनाना सङ्गीते महती रुचिरवाप्यत—

त तस्य स्वरसङ्क्रमं मृदुगिर: श्लिष्टञ्च तन्त्री-स्वनं,
वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव॥ ३, ५॥

चित्रकलायाश्च सर्वत्र प्रचार आसीत्—"चित्रफलअ निसण्णदिट्ठी मद्दणिआए" (अं०-४) प्रतिमा-निर्माणकलायामपि जना दक्षा आसन् (अ० २), देशस्याधिकावस्था नितरामेव वरमासीत्। शिशवस्तदा सुवर्णघटितक्रीडनकैरक्रीडन्—इत्यस्मिन् विषयेऽपि सङ्केतो लभ्यते। वैदिकधर्मस्य बौद्धधर्मस्य चोभयस्य प्रचार आसीत्—'यासां बलिः सपदि मद्गृहदेहलीनाम्'—अ० १, 'शाक्य-श्रमणकं शावुनेति अ, २। रूपकस्याध्ययनेन स्फुटतयैव तस्मिन् काले राजनीतिकी दशा शोचनीयतां गतासीदिति ज्ञायते। देशो लघु-लघुराज्येषु विभक्त आसीत्। शासन प्रबन्धोऽतिश्लथोऽदृश्यत। अपराधिनोऽतिकठोरतया दण्ड्यन्त च।

संस्कृतरूपकेषु वस्तुतो, मृच्छकटिकमद्भुतमनुपमञ्च रूपकम्। तत्र रूपककारेणातिवैदग्ध्येन प्रेमकथा राजनीतिकघटनाभिः सह निबध्य गीतास्ति। संस्कृतसाहित्ये चरित्र चित्रणप्रधानेषु रूपकेष्वन्यतम रूपकमिदम्। तत्र सर्वविधानामपि पात्राणां सन्निवेशः कृतो रूपककारेण तस्मात् तत्र समाजस्य यथार्थं सजीवं च चित्रं दृगत सञ्जायते। तत्र जीवन-घटनानां च विविधानां समुपस्थितत्वात् तद्रङ्गमञ्च-कृते नितान्तमेवोपयुक्तं वर्तते। प्रकरणस्यास्यैकैकोऽङ्कः स्वस्य-विशिष्टतां विदधाति। नास्त्येकोऽप्यङ्क एतादृक् यो न स्यात् वैलक्षण्यभाक्।

[1] अं० १०।

साहित्यं स्वयुगस्य मुकुर इति सत्यमेवोक्तं केनापि। क्षमादेव्याः कृतयो यद्यपि पठिता स्युस्तदा पाठकास्तत्र स्पष्टमेव नितान्तचरन्तया गान्धियुगस्य भारतं द्रष्टुं प्रभवेयुः। तेषां पुरः समग्रमपि भारतं सजीवं चित्रमिव भूत्वा समुपतिष्ठेत्। ते तद् विलोक्य पश्यन्ति आङ्ग्लशासनस्य दमनं, कृषीवलानां शोचनीयां दशां देशस्य च वास्तविकीमवस्थाम्। यथा चित्रशालाप्रदर्शिन्या जनाः पटोपरि प्रतिबिम्बितानि अनवच्छिन्नतया एकैकशो बहूनि चित्राणि पश्यन्ति तथैव क्षमादेव्याः साहित्येऽपि चित्राण्यासन्ति। तत्र द्रष्टुं कस्मिंश्चिच्चित्रे सन्मार्गस्थिति आङ्ग्लशासनमानेन प्रवर्तमानं महात्मानं गान्धिनम्, कस्मिंश्चिच्चित्रे हरिजनान् उद्धरन्तं तम्, कस्मिंश्चिच्चित्रे देशे सर्वत्र विततस्वराज्यचालनं नियन्त्रयन्तं तम्, कस्मिंश्चिच्चित्रे मानवीयान् अधिकारान् आङ्ग्लजातिं याचमानं प्रविनयं तम्, कस्मिंश्चिच्चित्रे देशस्वातन्त्र्याय कारागारीयकष्टानि सहमानं तम्, कस्मिंश्चिच्चित्रे देशभक्तान् बहून् बहुविधानि दुःखानि सहर्षं निषेवमाणान्, कस्मिंश्चिच्चित्रे ग्रामान् अपि जुह्वतोऽनेकान् तरुणान्, कस्मिंश्चिच्चित्रे दीन-दरिद्र विधवादिवृन्दं सकरुणं क्रन्दत्, वैदेशिकवस्त्रादि निरोधनाय देशसेवकान् कठोरं प्रयत्नं विदधानांश्च, कस्मिंश्चिच्च चित्रेऽन्यानि च बहुविधानि देशस्य शोचनीयानि मनोमर्मभागनिपीडकानि दृश्यानि दर्शं दर्शं नितरामेव व्यथामनुभवन्ति। वस्तुतः क्षमादेव्या रचनाः पाठकस्य हृदये देशभक्तिं प्रगाढां समुत्पादयन्ति। ता अधीत्य मानवो न कोऽपि कदाचिदेवंविधो यो देशानुरागी न स्यात्। ता मानवस्य हृदयात्सङ्कीर्णभावान् दूरीकृत्य तन्निर्मलं कर्तुं क्षमाः सन्ति। ता मानवं सङ्कीर्णतातोऽनुदारतातः क्षुद्रतातश्च निर्गमय्य तमुदारे पवित्रे विकारविहीने क्षेत्रेऽवतारयन्ति। तस्माद् वस्तुतः क्षमादेव्याः काव्यानि दर्शनग्रन्था इव सन्ति। आधुनिके युगकाव्ये या या विशिष्टता दृश्यते ता ता विशिष्टतां तत्साधु समवाप्नोति।

पण्डिता क्षमा यथा सत्याग्रहगीतादिकाव्यानि प्रणीय संस्कृतकाव्यसाहित्यसंसारं अदृष्टपूर्वमिव पुष्टं व्यतनोत्, तथैव सा कथानां सृष्टिं विधाय संस्कृतकथासाहित्यसंसारमपि नूतनतयैव कयापि अतुलयैव भव्यविभया व्यभूषयत्। भारतभूषा क्षमा स्वकथासाहित्यरचनया संस्कृतकथासाहित्यस्य गरिमाणमुदनमयत्। संस्कृतसाहित्ये कथानामपि यद्यपि प्राचुर्यता प्रेक्ष्यते चिरन्तनात् कालात् परम् आधुनिकः पाश्चात्त्यः संसारः कथोल्लेखनस्य यां विधां यां पद्धतिं यां च नूतनामेव

कृषीवल-नाविकादीन् बहून् साधारणजनान् अवतारयति। अथ चैषा वा शालिक्षेत्र-ध्वस्तदेवायतन–विशङ्कटगोष्ठ-पांसुलमार्ग–गुल्मगुल्मादिकानि दृश्यानि चित्रयति। समग्रमपि वातावरणं ग्राम्यं विद्यते। न तत्र वर्तते धनधा-न्यसमृद्धानां नगराणां छटा। प्रायेणास्मदीयेयं धारणा यद् धैर्यं महत्त्वमेव पुरुषेषु राजते न जनसामान्ये। इयं पण्डिता हामिदाया मेघनजपालिकाया दारिकाया-मपि तं गुणं दर्शयति। प्रायेण विश्वसिमो वयं यत् सुशिक्षिता जना एव अपरि-चितेष्वपि जनेषु समुदाचारं व्यवहरन्ति न तदितरे। परं कथाया अस्या लेखिका साधारणजनेष्वितरेष्वपि समुदाचारविधायिनीं धियं चित्रयन्ती दृश्यते।

मानवस्य मानसं दया क्षमा कठोरता घृणा स्नेहादीनां गुणावगुणानामास्पदं भवति—इत्येतद्धि तथ्यमेतस्या कथाया समवगतं जायते। अत्र कथातः एतस्याः काश्चन पङ्क्तय उद्धियन्ते याभ्यो मानवहृदयस्य ता विशिष्टता विदिता स्युः—

(क) "ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निरुद्धपुरुषविमोचन-पराभूत्।"

(ख) "...... परमवेदनया भृशं पीडितोऽस्मीति प्रतीता च तत्क्लेशं प्रशम-यितुं निश्चिकाय।"

(ग) "..... निर्गमात् प्राक् मयास्य बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकर्णीवदायामासाचक्री।"

(घ) "अनपत्यासीन्मद्गेहिनी। तस्यामन्यतयातिकुपितस्तां सार्धत्रयो-दश वर्षेभ्यः प्राग् गृहान्निष्कासितवानहम्। नान्या च कन्या परिणीतवान्।"

(ङ) "मृत्युमुखात् परित्रातोऽस्मि तया। तस्या भावी भर्ता मन्नाविको भविता।'

(च) "दीयतां पञ्चशती रूप्याणामर्हते जनायास्मै। यत्र मे पितामहस्य पितामहाश्च निवासस्तत्रैव समुचितो ममापि। विद्यते हि दिष्ट्या पर्याप्तं धनमे-तयोः सन्निधे संग्रहार्थमिति स—निश्चय प्रोच्याग्रे च सपदि सप्लुत्योच्चै-र्था तत्पूर्णां वलस्याङ्के सुवर्णमुपानिदधात्।"

पण्डितायाः क्षमायाः कथासु सौन्दर्यमिदमपि राजते यत् सा तत्र प्रथमं हि आदौ किमपि रहस्यबीजं वपति। एतत् कृत्वा सा पाठकानां मानसेषु कौतूहलं जनयति। कथायाः ततः तेन विधिना सा विदधाति यत् उत्तरोत्तरं कौतूहलवर्ध-नकारिणं कथायां सञ्चारयति। ततश्च अन्ततो नितान्तहृदयस्पर्शि रहस्यं समु-

द्रक्ष्यन्ति । पाठका कथामधीत्य निशम्य वा चकितचकिता इव नूत्ना कमपि विचित्रमेवानन्दमनुभवन्ति ।

पण्डिता क्षमा सरस सरलञ्च गद्यं निबध्नाति । तदीये गद्ये प्राञ्जल प्रवाह प्राप्यते । नैसर्गिकश्च छटा परिलक्ष्यते । वर्णक्रमो नातिदीर्घो न चातिह्रस्वो भवति । पाठकस्तत्र क्वापि न क्लाम्यति न ताम्यति अपि तु कथापठनार्थं परमोत्साहमश्नुते । यद्यपि एतस्या सर्वोपरिष्या गद्य न श्लेषश्लिष्ट न अलङ्कारप्रभूतभार क्लान्त न दीर्घदीर्घतरसमासमङ्कीर्णं खलु विलोक्यते पर पाठकाना मनो यथात्र रमते, सम्भवतो, न तथा तत्र तत्र रमते प्रीतिं वा विन्दति यद् भवति श्लेषसमासोक्तिविरोधाभासयमकादिभिराकीर्णम् । एतदीये गद्ये वस्तुतस्तु संस्कृत भारती प्रसन्नता सुबोधता च परिपूर्णतां प्राप्यत । अत्रोद्धरणद्वयमेव निधीयते येन पाठका गद्यसौन्दर्य-सुधाकणिका काश्चन पातु प्रभवेयु —

( क ) "नास्मि किमागमभग्नक्षमा । चिराय त्वयावस्थितम् । परिश्रान्तोऽसि । क्षुधार्तोऽसि मया । याहि गेहम्, याहि शालाम । तथाम्बा त्वदागमनोत्कण्ठिता त्वा प्रति क्षमाणाऽसहाया स्थिता स्यात् ।"

( ख ) "सय सरोजलोचना कुन्दकुड्मलदन्तपङ्क्ति प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना धीरापि स्मितमति स्नेहनिर्झरसम्प्लुता दमयन्तीव परमदमनशीला क्षमानतागता सुरसुन्दरीव कमनीया कृषीवलस्य मन्त्रादिकार्येषु मुदा प्रयस्यन्ती सुखमास्त ।"

( ग्रामज्योति )

पण्डिताया क्षमाया कथामुक्तावलीमुद्दिश्य सरदारपाणिक्कर आह—"संस्कृतकथामुक्तावली आधुनिकस्य युगस्य सर्वोत्तमा रचनास्ति । एतदीया भाषा सरसा सरला प्रसादगुणगुम्फिता वर्तते । अत्र वर्तमान भारत नैजेऽनवद्य स्वरूप प्रतिबिम्बित दृश्यते । वस्तुत एष कथासङ्ग्रह क्षमाया पण्डिताया संस्कृतसाहित्यस्य कृते अद्भुत चिरस्थायि प्राभृतम् ।"

गीति—मीरालहरी नाम गीतिकाव्य गीतिकाव्येषु शुद्धसंस्कृतपदपद्धिकाव्य मधुकरमञ्जुलपदविन्यासकल्पितमिव रत्नकल्पनाकलितमास्ते । तत्र भावनाना विशा चमत्कारचञ्चलस्पन्दस्य समञ्जलता च अनुपमैव प्रेक्ष्यते । नूनं गीतिकाव्यमिदं प्रणीय अनया मानुकहृदयसा संस्कृतगीतिकायाना श्री सवर्द्धितैव ।

नाट्य हि काव्येषु हि यस्य श्रेष्ठत्वम् । पण्डिताक्षमाया नाटकानि तत्रत्ये

उतं समीचीनतया सम्पादयन्ति यद् हृदि निधाय नाटकानां सृष्टिर्नाटककार्याचार्यैः कृता। 'गिरिजयप्रतिज्ञनवालविधवादिनाटकानि तदीयानि वर्तमानयुगस्य प्रतिनिधित्वमनुतिष्ठन्ति। एकाङ्कि साहित्यमपि तस्या एकाङ्किनाटककलाया' स्त्रीयमाभ्यन्तर रूपं परिगृह्य दीप्यन्ते।

विविधरचना—विविधरचनासु इह पण्डितक्षमाया पत्रभापगादीनामन्तर्भावो भवति। इमानि च पत्रभापगादीनि सन्ति महत्त्वशालीनि। एभ्योऽपि सर्वे आत्मानमुपकर्तुमर्हन्ति। प्रकाशिते सति एवंविधे साहित्ये लोको नून तत् कृत्यागं न्यमर्जयितुं शक्नुयात्।

श्रद्धेया कवयित्री क्षमा न केवलं साहित्यं सृष्ट्वा स्वं देशमसेवत परं सा भारतभाग्यप्रकाशमहात्मगान्धिनो नायकत्वे ग्रामे ग्रामे नगरे नगरे च परिभ्रम्य चर्खीयं श्रेष्ठैराचारैरदारैश्च विचारैर्दासत्वशृङ्खलानिबद्धाया जनताया स्वातन्त्र्यप्रेयनाया स्फूर्तिमपि समुदपादयत्। सा भारतस्य प्रायेणाष्टादशभाषासु अभिज्ञता न्यदधात् तस्मात् यत्रापि अगात् तत्र स्वविचारास्तत्प्रदेशस्यैव भाषया स्फटीकृतवती। तस्या देशभक्तत्वात पञ्चत्रिंशद्विदुषीत्वात् तस्या भाषणानि देशवासिना मानसेष्वमोघं प्रभावमक्षिपन्।

इयं प्रतिभाशालिनी विदुषी २२-४-५४ तमदिनाङ्के भूलोके निजकृतिकीर्तिं वितन्य तिरोहिताभवत्। भूयसतात् सदा भारतभुवं एवंविधाभि संस्कृतविदुषीभिर्भगवान्।



## श्रीपण्डितराज-जगन्नाथः

जगति उदबुद्बुदवद् कति कति न जना प्रतिदिनमुत्पद्यन्ते विलीयन्ते च पर तेष्वमेव जनुर्धन्य येषां जनुषा मातुर्भारत्या मन्दिरस्य विजयवैजयन्ती उत्तुङ्गतरा भूत्वा दोधूयते। श्रीपण्डितराजो जगन्नाथस्तु विद्वद्धौरेयेष्वन्यतमो जातो य हि विपश्चित्तल्लजा यावद्भावस्तावत् सरस्वत्या कण्ठ स्वरचनारत्नैः सर्वथैव समलङ्कृतवन्तो महान्ते स्म। पद वाक्य प्रमाणपारावारीणानां पण्डितानां लोके स श्लाघ्यानामनन्यगामिनीं मामासमाददाना शुशुभे। तस्मिन् विद्वज्जगदद्भुता प्रतिभा-मद्भुतं पाण्डित्यमद्भुतश्च प्रबन्धप्रणयनप्रवीणत्वमवलोक्यते। वस्तुत सुरभारती-स्वर्णसाहित्यम्बरे तस्य पदमम्बरमणिपदमिव निरतिशयया तेजस्वितया विद्योतते।

“मूर्तिमतेव नवावाममफलकमननप्रमादेन द्विजकुलमेनाहितकिशोरभवन कायेन माथुरकुलसमुद्रेन्दुना रायमुकुन्दादिष्टेन श्रीसार्वभौम शाहिजहानप्रसादाधिगत‘पण्डितराज’पदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनाम्रकविता सन्देहसान्द्रापाख्यान निरमीयत”—इत्यनभिनन्दनीयाभिराम्यस्वविलासकथाभि पङ्क्तिभिस्तस्य शाहजहाँ राजसभाधिष्ठितत्व किञ्च तस्य तैलङ्गब्राह्मणत्वञ्च स्फुटतयैव ज्ञायते। ‘दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः’ इत्यनेन च तदीयेन वाक्येन स स्वकीय नवीन वयो दिल्लीश्वरस्य छत्रच्छायायामनैषीदिति भवति निश्चितम्। एतेन तस्य महद्गौरवशालित्वमपि च सिद्धयति।

अथ स्थितेषु कतिपयतिथिषु तस्य ‘क पिता, का माता आसीत्, को गुरुरासीत्’, इत्यत्र तस्मिन् प्रकाण्डवैदुष्यसागरे परिचयश्च समस्तेऽपि ग्रन्थेन समजायत —

(क) तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालित-
श्रीमत्पेरमभट्टसूनुरनिश विद्वल्ललाटन्तप।
सन्तुष्ट कमठाधिपस्य कवितामाकर्ण्य तद्वर्णन
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ॥

(ख) श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्ट, स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः॥

(ग) निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसा मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण॥

पण्डितराजो जगन्नाथ इमान् ग्रन्थान् व्यरचत्—

(१) गङ्गालहरी (पीयूषलहरी) एष ग्रन्थो गङ्गास्तवविषयकोऽस्ति।

(२) सुधालहरी (सूर्यप्रशस्तिरत्र वर्तते)।

(३) अमृतलहरी (अत्र यमुना स्तुतास्ति)।

(४) करुणालहरी (इह भगवतो विष्णोः स्तुतिः कृतास्ति)।

(५) लक्ष्मीलहरी (लक्ष्मीप्रशंसायां रचितेयम्)।

(६) आसफविलास (आसफखानस्य प्रशंसायां रचितः)।

(७) प्राणाभरणम् (कामरूपाधिपतिप्रशंसायामुपनिबद्धम्)।

(८) जगदाभरणम् (उदयपुराधीश्वरकर्णसिंहसूनुजगत्सिंहस्य वर्णनमत्र विहितम्)।

(९) चित्रमीमांसाखण्डनम् (अप्पयदीक्षितप्रणीतचित्रमीमांसाख्यग्रन्थस्य खण्डनमिह दृश्यते)।

(१०) मनोरमाकुचमर्दनम् (भट्टोजिदीक्षितकृतस्य मनोरमाभिधग्रन्थस्य खण्डनरूपम्)।

(११) भामिनीविलास (अत्र सन्ति गृहीताः करुणाश्रृङ्गारनिर्वेदाद्यनेकविषयाः)।

(१२) रसगङ्गाधर (अलङ्कारशास्त्रविषयकोऽयमद्भुतो ग्रन्थोऽस्ति)।

यमुनावर्णनपरकमपि ग्रन्थं गद्ये पण्डितराजश्चकार इत्येतद् विदुषां जगति श्रूयते परं साम्प्रतं न स प्राप्यते। पण्डितराजोऽन्योक्तिसम्बन्धिनीमपि रचनामेकां रचितवान्। एषा तदीया रचना सम्प्रति हि तस्मिन् सङ्ग्रहे सङ्गृहीतास्ति

यत्र पण्डितराजप्रणीतानां कृतीनां संग्रहः कृतः वर्तते । रसगङ्गाधरो नाम ग्रन्थो न पूर्णः प्राप्यते ।

संस्कृतवाङ्मये गीतिकाव्यप्रणेतारो न सुप्रसिद्धाः भर्तृहरि बिल्हण-जयदेव-गोवर्धनाचार्य प्रभृतयः कवयोऽभूवन् तेषु पण्डितराजस्य जगन्नाथस्यापि गणना सादरं गीतिकाव्यकोविदैर्विधीयते । पण्डितराजस्य गीतिषु रसिकान्तस्तलस्पर्शिनी सूक्ष्मविषयिकाभिनिवेशानन्दवर्षिणी मधुरता विलसति । तदीयगीतयो हि सहृदयान् स्वयमेव स्मारयन्ति । तदीयाश्च शब्दा तदर्थ मनोज्ञतायां प्राञ्जलस्य हृदयाकर्षकतां धत्ते यत् भर्तृहरेः सौरभं शोभते । तथा भावसन्निभा सौष्ठवपदविन्यासः सर्वत्रैव गीतिषु तदीयासु विलसति तस्मात् विरचिता अपि तस्य गीतिकाव्यानि नितरामेव प्रीणयन्ति । भामिनीविलासस्थलत्रितयमुक्तकानां रमणीया सरणी वरीवर्ति ।

(अ) तीरे तरुण्या वदनं सहासं
नीरे सरोजञ्च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमाला ॥

(आ) रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया
सौन्दर्यामृतमुद्गिरद्भिरभितः सम्मोह्य मन्दस्मितैः
एष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥

इत्येवमादिभिर्भूयोभिर्मनोहरसुमनोहरप्रसन्नललितैः श्लोकैर्विभूषितमास्वाद्य भामिनीविलासस्य, भावुकानां मनांसि नितरामाह्लादयन्ति ।

पण्डितराजस्य कवितायां नैसर्गिकः प्रवाहः सर्वत्र प्रवहति । तत्र पदानां मनोऽभिरामा रचना कल्पनायाश्च हृदयहारिणी चमत्कृतिः चकास्ति । स महान् परमेशभक्त आसीत्, अत एव स्तुतिकाव्येषु गङ्गालहरी-सुधालहरी-करुणालहरी-प्रभृतिकृतिषु भक्तिभावना प्राचुर्येण भूत्वा आनन्द-सुधासागरनिमज्जनचतुरा च भूत्वा समुल्लसति । स अवसरेऽपि स्वाभिमानं विहाय मनसाऽपि छल-कपट-दम्भादिदूषणं परित्यज्य नितान्तमाह्लादयितया आत्मसमर्पणधियं निधाय, स्वहृदयान् भक्तिप्रवणान् भावान् स्तोत्रेषु समावर्जितवान् अतो भक्तिभावमेव उत्पाद्य रसपदवीमधिरूढानि । पिबन्तु सुधिय इह त्रि चतुर्भक्तिसुधासीकरान् —

(अ) अयि दीनतरं दयानिधे, दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम् ॥
सुमहान्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि ।
स कथं परमाणुदेहिनो परमाणोर्मम धारणे श्रमः ॥

(आ) नितरां विनयेन पृच्छ्यते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्तदरितो नोद्धरसे यदद्य माम् ॥
न धनं न च राज्यसम्पदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥

(इ) निधानं धर्माणां किमपि च विधानं नवमुदाम्
प्रधानं तीर्थानाममलपरिधानं त्रिजगताम् ॥
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥

(ई) विषीदता नाथ विषानलोपम-
विषादभूमौ भवसागरे चिरम् ।
परं प्रसीदाशरणस्य नातुरा
मयायमात्मा भवते समर्प्यते ॥

पण्डितराजो जगन्नाथोऽपि श्रीहर्ष-भवभूतिसदृशः स्वाभिमानशाली बभूव । स संस्कृतसाहित्ये यथा पाण्डित्यकवित्वादिहेतोर्विश्रुतोऽस्ति तथैवासौ स्वगर्वोक्तिनिमित्तादपि विख्यातो वर्तते । वस्तुतस्तस्य गर्वोक्तयो न सत्यलीकाः । अवर्ततापि तत्रागाधं वैदुष्यं विलक्षणा च प्रतिभा तस्माद् गर्वोक्तिनिभेन स स्वयमभिव्यक्तीकृतस्तर्हि दुष्टमेव तत् कृतम् । श्रूयतामेका तदीया गर्वोक्तिः —

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन् मूर्धानं नृपशुरथवाऽयं पशुपतिः ॥

पण्डितराजोऽन्योक्तिग्रथने च परामेव पटीयस्तां गाहते । अन्योक्तिषु तदीयासु अपूर्वा मनोज्ञता विमलञ्च व्यङ्ग्यं विभाति । अतस्ता प्रेक्षावतां कण्ठाभरणतां गताः सन्ति—

(क) आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु॥

(ख) नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्।
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः॥

(ग) पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम्॥

पण्डितराजस्य काव्यकलायां सहृदयहृदयाह्लादकतां भाववैचित्र्यचमत्कार-धाम्नां सुधावर्षिण्या मधुरतया निःस्पन्दतरलिताञ्च समुल्लसन्तीमिवाप्य कस्य न चेतोऽवनम्रेऽपि विचारोऽयं समुन्मीलति—

गिरिरसि ख नु नाम कियच्चिर
किमभिधानमसावकरोत् तपः।
रसिक-मानस-रञ्जनकौशला
रचयितुं कवितां प्रभुरेष यः॥

पण्डितराज आसीत् सकलशास्त्रावगाहिधिषणो मनीषी। तदीये प्रकाण्डपाण्डित्ये हेतु धनञ्जयदर्शनपाटवं व्यराजत। तस्यैतद् दिव्यं वैशिष्ट्यं तत्प्रणीतचित्रमीमांसाखण्डन-मनोरमाकुचमर्दन-रसगङ्गाधरादीनां ग्रन्थानामवलोकनेन सम्यग् विदितं सञ्जायते।

चित्रमीमांसाखण्डने अप्पयदीक्षितमनुलक्ष्य प्रत्याख्यातुं वक्ति स—
"यदपि ... लक्षणद्वयं तैरेव निर्मितं तदसत्। दर्शनस्य विलक्षणस्या-लङ्कारस्य, विलक्षणतानतरस्य वा तत्त्वात्यन्ताविरोधेऽसम्भवात् तादृशाद्भुतता न स्यात्। तस्य सर्वथैवात्यद्भुतस्य चमत्कृत्यविरोधे वैयर्थ्याच्च। अथ यदि चमत्कारविशेषमूलं तादृशादद्भुतत्वं तदुच्यते तदा यथा सौन्दर्यं सर्वत्र इत्यलङ्कारापत्ते……।"

पण्डितराजो वस्तुतस्तु आसीत् सूक्ष्मदर्शीय आलोचकोऽद्वितीयः। तस्य

प्राक्तनेषु शास्त्रकारेषु महती श्रद्धासीत्। स मम्मटस्यानेकसिद्धान्तान् प्रत्याख्या तवान् पर न क्वापि स प्रत्याख्यानार्थमशिष्टां भाषामवलम्बमानोऽधिगम्यते। स स्थाने स्थाने 'गतम्य शिर मणि'रित्यनेन विशेषणेन सम्बोधयन् समवलोक्यते। पर स्वकालीनै भि वनिभि प्रधीभि सार्धं तस्यासीत् स्पर्धा। विशेषतो भट्टोजिदीक्षिताप्पयदीक्षिताभ्यां सह। तस्मादमी तत्सिद्धान्तनिरसन क्वचित् पम्पनामादाय प्रतिपद्यते। अस्तु तावत्।

पण्डितराजो महारसालिकोऽसीत्। तस्य तर्कशैल्या लोकोत्तरस्य कार्य कमनप्रसादनप्रवीणस्य तल्लिखितेषु सिद्धान्तग्रन्थेषु स्फुटतया विशदतया च समवलोक्यते।

पण्डितराजस्य रसगङ्गाधरोऽपूर्वोऽद्भुतो मूर्धन्यश्च ग्रन्थोऽस्ति अलङ्कारग्रन्थेषु। अध्ययनीयोऽयमस्ति ग्रन्थ। अलङ्काराणामिह परमगाम्भीर्येण विवेचन तलस्पर्शिन्यां मर्मभेदिन्यां भाषायां विहित दृश्यते। तेषां स्वरूपस्य प्रतिपादने च न्यास आचरितो विद्वद्वरेण लेखकसत्तमेन वस्तुत सोऽस्ति अभिनन्द नीय। न केवलमेतावत्यत्र विशिष्टता विद्यतेऽस्य ग्रन्थस्य। एषा विशिष्टता तु न वर्तते तादृशी गरीयसी यादृशी रसनिरूपणविषयके स्थले दृष्टा भवति। तत्र तु पण्डितराजस्य प्रतिभायाश्चरम उत्कर्ष एव वीक्षितो जायते। नानाधस्थव्द स्थले पदार्थोपस्थित्यर्थं या प्रक्रियाङ्गीकृतास्ति किञ्च व्यञ्जनामधिकृत्य यो हि सारो निस्सारित सोऽपि विद्वल्लोक भृश प्रीणाति। सर्वेऽपि विद्वांस एकमतेन ग्रन्थेऽस्मिन् प्रदर्शित काव्यलक्षण, शब्दगुणपपादन, गुण निरूपण, रसरसाङ्गाना मुपाङ्गानाञ्च प्रतिपादन, भावानाञ्च विशदतयावदाततया च कृत वर्णन प्रशसन्ति पुन पुन। को नाम रस इत्यत्र स आह—

'समुचितललितसनिवेशचारुणा काव्येन समर्पितै सहृदयहृदय प्रविष्टैस्त दीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिरलौ किकविभावानुभावव्यभिचारिशब्दव्यपदेश्यै शकुन्तलादिभिरालम्बनकारणैश्चन्द्र कादिभिरुद्दीपनकारणैरश्रुपातादिभि कार्यैश्चिन्तादिभि सहकारिभिश्च सम्भूय प्रादु र्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्तितान दांशावरणाज्ञानेनात एव प्रमृष्ट परिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाण प्राग्विनिविष्टवासनारूपो रत्यादिरेव रस।" अत्र स मम्मटाभिनवगुप्त भट्टनायकप्रभृतीनामनेकेषां प्राचामाचार्याणां बहूनाञ्च नव्यानां

मनस्युपस्थापयन् "रसो वै स" इत्येतच्छ्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति स्थापयति।

केचन कविकौशल-कल्पितकमनीयतास्पदं शब्दमेव काव्यं मन्यन्तेऽपरे कविकौशल-कल्पितकमनीयतास्पदं शब्दार्थयुगलमेव काव्यमिति वदन्ति। काव्यस्य एतद्द्वयं सामान्यलक्षणं मतम्। पण्डितराजो जगन्नाथस्तेषु काव्यलक्षणकारिष्वन्यतमो यः शब्दमेव काव्यत्वेन स्वीकरोति। पण्डितराजस्य काव्यलक्षणमिदं— "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" स्वलक्षणस्य व्याख्यायां स इमानि वाक्यानि निदधानोऽवाप्यते :—"इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत् प्रतिपादितार्थविषयकभावनात्वं, चमत्कारजनकतावच्छेदकं तत्त्वम्। स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम्।" पण्डितराजः शब्दार्थयुगलं न काव्यत्वेनाङ्गीकुरुते। स आह—"काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च ... तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्।"

पण्डितराजः काव्यस्य कारणमेकमात्रं हि उपाधिं प्रतिभां मनुते। कारणान्तराणि तु परम्परयैव सः काव्यस्य कारणत्वेन स्वीकुरुते। स ब्रूते—"तस्य च कारणं कविगता केवला प्रतिभा।"

रसगङ्गाधरकार उत्तमोत्तममध्यमाधमभेदात् काव्यं चतुर्षु भागेषु विभजति। "केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचख्युः" इत्यभिधाय त्रिभेदमानिन आक्षिपति।

पण्डितराजस्त्रीन् एव गुणान् मन्यते। गुणानां रसधर्मत्वेऽपि अयं विद्वान् महतीं समालोचनां "प्रत्यक्षमेवेति चेत् न ......"इत्यादिशब्देषु सन्निवेशयन् दीक्षितो भवति। स "आत्मनो निर्गुणत्वात् रसे गुणानां स्थितिर्न भवितुं शक्नोति" इति वदति। इदमपि स ब्रवीति 'यद् रसस्योपाधय सन्ति रतिशोकक्रोधादयः। तेषामिच्छा(ज्ञान)रूपत्वात्, ते गुणा इत्युच्यन्ते। गुणो न गुणे स्थातुं प्रभवति : एतद्धेतो रत्यादावपि गुणस्थितिर्न सम्भवा। तस्मात् शब्दादौ गुणा वसन्ति।'

अभिधादिशक्तिनिरूपणकारिषु पण्डितराजजगन्नाथोऽप्यस्ति। तिसृणामपि अभिधा लक्षणा-व्यञ्जनानां शक्तीनां प्रतिपादने व्याख्याने च सः गम्भीरं पाण्डित्यं

सूक्ष्मदर्शित्वञ्च प्रकटीकुर्वन्नवाप्यते । "शक्यवाच्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा" इत्यभिधाया लक्षणमुपपादयन् स 'केवलसमुदायशक्ति, केवलावयवशक्ति समुदायावयवशक्तिसङ्करश्चे'ति भेदत्रयेण तस्यास्त्रिविधत्वमामनति । 'शक्त्या प्रतिपादकत्वमभिधा' इत्येतदप्पयदीक्षितोक्तं तल्लक्षणमसौ 'इह शक्त्याख्यायमानायाम्'......इत्यादिशब्दैर्निरस्यन् 'न चाभिधातः शक्तिरतिरिक्ते'त्याद्युक्त्वोपसंहरति स्वकीयं तत्प्रत्याख्यानारम्भमवतरणम् । मम्मटादिरिव सोऽपि चतुष्टयी शब्दानां प्रवृत्तिरिति मन्यते । "शक्यसम्बन्धो लक्षणे"त्येतल्लक्षणालक्षणं प्रकाश्य स तस्या निरूढा प्रयोजनवती चेत्येतौ द्वौ भेदावभिधाय प्रयोजनवत्याः षड्विधत्वं प्रतिपादयति । तत्र च स प्राचामाशयमपि मतभेदप्रदर्शनपुरस्सरमभिव्यनक्ति । एतावदेव न 'नव्यास्तु' इत्यतस्तेषामाकुलीभाव स्यादि'त्येतत्पर्यन्तं नव्यानामपि विचारान् सम्यक् समालोचयति । यथा काव्यप्रकाशे मम्मटेन व्यञ्जनायाः प्रतिष्ठापनमनेकानेकाभेद्यदृढयुक्तिपूर्वकं विहितं तथा रसगङ्गाधरे तत्र दृश्यते परं संलक्ष्यक्रमध्वनिनिरूपणावसरे पण्डितराजस्तदुपपादनं वैदग्ध्येन विदधान पर्यवलोक्यते । एतस्मिन् स्थले स ब्रूते—"....'तस्माज्ज्ञानार्थस्याप्राकरणिकेऽर्थे व्यञ्जने'ति प्राचां सिद्धान्तः शिथिल एव । प्राकरणिकाप्राकरणिकयोरर्थयोरुपमाया तु सा कदाचित्स्यादपीत्यत्रास्माकं प्रतिभाति... ।"

भाव' कः इत्यत्र स्वमतस्य प्रदर्शनात् प्राक् पण्डितराजस्तत्तद्भावलक्षणेषु दोषं दर्शयति । तदीयानि भावप्रकरणगतानि वाक्यानि द्वित्राण्यत्र निधीयन्ते—( १ ) "अथ किं भावत्वम् ? विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसस्यानुभावेऽतिव्याप्त्यापत्तेः ।" ( २ ) "नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वम् । भावादिचर्वणायाम् ...अतिप्रसक्तेः ।" इत्थं हि पण्डितराजस्तल्लक्षणमालोचयन् स्वाभिमतं भावलक्षणं लिखत्येवम्—"विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम् ।" एतावता नैव "व्यभिचार्यञ्जितो भावः" इत्येतत् काव्यप्रकाशकारोक्तञ्च भावलक्षणं प्रतिष्ठाप्य परितुष्यति । निःसन्देहं, भावानां यद् विशदं यथार्थं निरूपणं पण्डितराजेन कृतं तदतितरां रमणीयं वर्तते । एवमेवानेकार्थशब्दस्थले पदार्थोपस्थितिः केन प्रकारेण जायते—इत्येतद्विषयकं यदुपपादनं पण्डितराजेनानुष्ठितं तद् विद्वद्वराणां निखिलामपि जगतीं मुग्धां प्रीणाति । पण्डितराजो यमपि विषयं विविनक्ति तं प्रकाण्डपाण्डित्य-

अर्थाहरणकौशलं किं स्तुमः शास्त्रवादिनाम् ।
अन्वयेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरङ्गहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥



अस्ति। सा यथास्थानं यथावसरं च मृदुलोत्कटा च दृश्यते। तथापि रसास्तत्र नितरामुचिततया दृढतया च सन्निवेशिता सन्ति। वीररसः, यस्याः प्राचीने संस्कृतसाहित्ये प्रायेणाभाव एवास्ति, ग्रन्थेऽस्मिन् अस्ति प्रधानः। शृङ्गारोऽप्यस्ति। अस्ति च सः सर्वथा सात्त्विकः सुकोमलः प्रसन्नश्च। शान्तिर्न तत्राऽऽलोचिता समागताऽस्ति। युद्धसन्दर्भे रौद्र-भयानक-बीभत्सानाञ्च च वीरे अद्भुतस्य निर्वहणं पर्याप्तमात्रायां समीचीनमेव सम्पन्नमस्ति। राजनीतिव्यापारचातुर्यस्य सङ्ग्रामशौण्डतायाश्च निरूपणमत्यन्तं मनोज्ञं वर्तते। उच्चतमा च विशिष्टनैयमेतद्दीया यद् गृहीतो हि विषय ऐतिहासिको विद्यते तत्रास्ति यथार्थता न च कपोलकल्पितता तत्र वर्तते। देशभक्त्या जन्मभूमिभक्त्या चैषा कृतिः परिपूर्णमास्ति। तत्र राजानं प्रति प्रजाया भक्तिः, प्रजाश्च प्रति राज्ञो भक्तिरथ च द्वयोरेव धर्मं प्रति भक्तिः किञ्च राष्ट्रियभावना उच्चैः परिस्पन्दते। एतादृशानां भावानां वस्तुतोऽर्वाचीनेषु संस्कृतग्रन्थेषु सर्वथा अभाव एव प्राप्यते।

नाहमवबोद्धुं शक्नोमि, कस्मात्कारणात्, विद्वन्मण्डलमशीलनापूर्णेषु हठाद्गाढसृष्टपदगुम्फितेषु माधवविजयादिषु तावन्तं महिमानमारोपयन्ति, अत्र च ते रसपूते ग्रन्थे शिवराजविजये—ईर्ष्यन्ति न चेत्, तदा तेषां पराङ्मुखता तु अस्ति। पन्थस्यास्य यावान् प्रचारः स्यात् तावदेव वरम्।"

महामहोपाध्यायो गोपीनाथमहाकविराजश्चापरतनां विद्वद्भिरेव इदमैतिहासिकं गद्यकाव्यं साम्प्रतिकस्य युगस्य श्रेष्ठा रचना मन्वानो ब्रूते—यद् यद्यपि कृतिरेषा नव्या परमुत्कृष्टतमस्थानाधिष्ठापनार्हा।

इदं सर्वं विपश्चिद्वराः सम्यग् जानन्ति यद् गद्यकाव्यस्य प्रणयनं दुष्करं भवति। पद्ये सौष्ठवं तु सुलभतया समुत्पद्यते परं तद् गद्ये सुलभतया न कदापि सम्भवति। सर्वाङ्गीणसुन्दरताया समुन्मीलनं तु तत्र ततोऽपि कठिनं भवति। अत एव 'गद्यं कवीनां निकषं वदन्ति' इत्येषा सूक्तिः सर्वत्र सुविदिताऽस्ति। गद्यकाव्यस्य दुष्करतां लक्ष्यीकृत्य—"पद्ये छन्दःपारवश्यात् स्वच्छन्दपदप्रयोगो न भवतीत्यनिच्छतापि कविना प्रसङ्गप्राप्तं स्वाभाविकं स्वरूपमपि वस्तुनः क्वचिद् विस्मार्यते, क्वचिद् यद्यपि नियताक्षरे संक्षिप्य सोद्दिष्टं विधीयते, क्वचिच्च द्वित्रस्वाभाविकपदप्रयोगमप्यापतनीयान्यपि पारस्परिकाशयसम्बन्धप्रत्यक्षाश्रयाणि जटिलीक्रियन्ते। गद्ये तु यदि किमपि शब्दतोऽस्वाभाविकं स्यात्, तत्क्षणमेव निर्गलति सहृदयम्—इत्यादिकारणं पद्यापेक्षया गद्यमेव महामान्यं

भवति" इत्येतद् अम्बिकादत्तव्यास स्वयमपि वक्ति परं यदा वयं नैजदृष्टिं तस्य शिवराजविजयरथिनगद्योपरि आपाततयैव निक्षिपामस्तदैव तत्क्षणं ज्ञातं जायते यद् श्रीव्यासविदुषो गद्ये ता सर्वा विशिष्टता निदधाति या श्रेष्ठगद्ये भवन्ति।

"नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्॥"

इति यद् बाणेन गद्यस्य सौन्दर्यमुदीरितं तत् स्फुटमेव श्रीव्यासस्य कृतौ-शिवराजविजये विलोकितं भवति। तत्र सर्वत्र मनोभिरामाणां पदानां सद्भावः कृतं वर्तते, नवनवार्थानामुन्मेषः संलक्ष्यते; न क्वापि अस्वाभाविकताया एकोऽपि दृष्टो भवति, श्लेषस्य दोषग्रहो यत्रापि कृतो न स अस्ति शिरोवेदनाकृत्। पाठकः श्रोता च अनायासेनैव सर्वत्र रसं पिबन् अग्रे उपसरन् वं चिता जायते। संस्कृतभाषाया वीरतापूर्णभावानामभिव्यक्त्यर्थं कियती बलवती सफला च शक्तिर्विराजते किञ्च नव नवविचारस्या समाकारिणी कीदृशी कियती च महती प्रभविष्णुता प्रस्फुरतीति च श्रीव्यासविपश्चित्तस्य शिवराजविजयाध्ययनेन सम्यग् ज्ञानं भवति। इत्थोदाहरणानि निधाय एतासां सर्वासां विशिष्टतानां किञ्च एताभ्यो व्यतिरिक्तानामन्यासां विलक्षणतानां प्रदर्शनस्य समासेनोद्योगो विहितो भवेद् येनोपरि निवेदितं निवेदनं प्रत्यक्षं स्यात् किञ्च समालोचकैर्विद्वद्भिर्ग्रन्थ मिममधिकृत्य या स्पृहा कृतास्ति तस्या अपि सत्यता प्रमाणिता भवेत्।

शिवराजविजयस्य रचनायाः कालः स आसीद् यदा भारतजनताया मानसे देशभक्तिभावना पूर्णतया प्रसुप्तासीत्, यदा भारतीया शोचनीयां दीनतां कापुरुषताञ्च अवलम्बमाना समवाप्यन्त, यदा तेषु नोत्साहो, न जीवनशक्तिः, न कर्तव्यपरायणता, न स्वधर्मपालननिष्ठा च व्यलोकिषत, यदा ते निद्रया, व्यसनेन बहुविधैश्च देशापकारानुरागैः कलहैरेव नैजं जीवनसमयं यापयन्त एव समुपालक्ष्यन्त, यदा तेषां शोणितेऽल्पापि उष्णता नान्वभूयत, यदा ते स्वकीयं गौरवं सर्वथैव विस्मरन्तो दासतामेव सर्वस्वं मन्यमाना सुखेन कालं क्षिपन्तोऽदृश्यन्त, यदा ते विनष्टशौर्यभावा भवन्तः परचरणचारितायामेव संलग्ना अवाप्यन्त, यदा ते स्वसंस्कृतौ स्वसभ्यतायाञ्च नितान्तमनभिज्ञा एव प्रत्यैयन्त, यदा ते निष्प्राणा सन्तोऽपि भूभार एव निर्लज्जा व्यालोक्यन्त, यदा ते परकृतं न्यक्कारमपि स्वकीयं सम्मानमिवावगच्छन्तः सर्वत्र समाभासन्त, यदा च ते सर्वस्वमौचित्यं विस्मरन्तो नृत्ये सङ्गीते हासे उपहासे च निमज्जन्तः पर्यदृश्यन्त। एतादृशे चिन्तनीये पतनकाले शिवराजविजयो भारतीया जनता देशभक्तिमन्व

दिशत्, तस्याम्नाहशेऽनेहसि किं प्रमुखं कर्त्तव्यमित्युपादिशत्, तस्या मानसे उत्साहस्योत्कटं स्रोतः समचारयत्, तस्यामात्मगौरवभावनामजागरयत्, तस्याः स्वान्ते वीरताया अनभिभवनीयां नितान्तवेगवतीं सबलां भावनामपूरयत्, तत्र च स्वातन्त्र्यस्य शक्तिशालिनः पावनान् भासुरांश्च भावान् कृत्स्नतया अजनयत्। 'क्वाधुना मन्दिरे मन्दिरे जयध्वनिः? क्व सम्प्रति तीर्थे तीर्थे घण्टानादः? क्वाद्यापि मखे मखे वेदघोषः? अद्य हि वेदा निरुद्ध्य वीथीषु क्षिप्यन्ते, धर्मशास्त्राण्युद्धूय धूमध्वजेषु ध्मायन्ते, पुराणानि पिष्ट्वा पानीयेषु पात्यन्ते, भाष्याणि अशयित्वा भ्राष्ट्रेषु भर्ज्यन्ते, क्वचिन्मन्दिराणि भिद्यन्ते, क्वचित् तुलसीवनानि छिद्यन्ते, क्वचिद् दारा अपह्रियन्ते, क्वचिद् धनानि लुण्ठ्यन्ते, क्वचिदार्त्तनादाः, क्वचिद् रुधिरधाराः, क्वचिदग्निदाहः, क्वचिद् गृहनिपातः" इत्याद्युच्चैरुद्घोषः सकलानामपि भारतीयानां मनांसि भृशमसौ दोलयन्, तेषां नयनानि उन्मीलयन्, तथा नाडीषु शोणितमुष्णं च प्रापयन्, अन्यायं प्रति तेषां रोमणि रोमणि रोषं जनयन्, अत्याचारपरायणानामुच्छेदाय विध्वंसनाय तथा स्नायुषु प्रचण्डां भीषणाञ्च जीवनशक्तिं समुत्पादयन् हि स समुपतिष्ठते।

यद् भारतं सम्प्रति घोरैः प्रतापशालिभिरत्याचारिभिर्विक्रमवद्भिर्वैरिताश्रासु शोभिनैर्विहीनमस्ति यत्र नाधुना शान्तिर्न च लक्ष्मीः न च सौख्यं न च धर्मो न च विद्यैव दीव्यते, यत्र च राजानः परस्परं कलहायन्ते स्नेहबन्धनं शिथिलीकृत्य च वैरे धियं नियोज्य स्वकीयान् एव विनाशयितुमुपक्रमन्ते, यत्रान्ये हि भग्नस्वशौर्यवैभवं सुन्दरीणां सन्दानेच्छुकचरणसरसिजेषु सादरं समर्पयन्तो दीव्यन्ते, यस्य दक्षस्य अमात्यसमुदायः स्वार्थचिन्तायामेव सततं निलीनोऽवाप्यते, यत्र नृपाः स्वप्रशंसाश्रवण एव प्रगाढां रतिं विदधति, यत्र च विद्वान् सोऽपि मूर्खमपि भूपं 'त्वं विद्वान् असि' इति, गुणगणरहितमपि 'त्वं गुणिनां शिरोमणिरसि' इति, बलरहितमपि 'त्वं बलवतामग्रगण्योऽसि' इति, कुरूपमपि 'त्वं कामदेवस्यावतारोऽसि' इति, उपचितप्रजानिग्रहहितमपि 'त्वं सर्वदा प्रजानां हिते निरतोऽसि' इति च कथयित्वा कथयित्वा सर्वत्र मिथ्याप्रशंसां विदधाना श्रुता भवन्ति, तस्य भारतस्य चिन्तास्पदं चित्रं निर्माय 'शिवराजविजय' प्रियस्य स्वस्य देशस्य निवासिनः सर्वानपि मानवान् सप्रश्रयं सानुरोधं च सन्दिशति यत् ते पतनगर्तनिपतितं स्वकीयं देशं समुत्थापयितुं मनसा वचसा कर्मणा च प्रयतेरन्।

'कार्यं वा साधयेयम्, देहं वा पातयेयम्" इत्येतद्धि नायकस्य एतस्य शिवराजविजयस्याभिमतम्। भारतवर्षस्य निवासिना स्वकीयस्य राष्ट्रस्य स्वतन्त्रताया रक्षणाय, स्वदेशस्य संस्कृतेः सभ्यताया भाषायाश्च परित्राणाय, स्वराष्ट्रस्य गरिम्णः परिवर्द्धनाय, स्वकीयस्य धर्मस्य च गोपनाय एतादृश्येव दृढीयसी प्रतिज्ञा कर्त्तव्येति शिवराजविजयस्य हार्दिकोऽभिलाषो बलीयान्। काम महान् प्रचण्डो झञ्झावातः प्रवर्तमानो भवेत्, काम दारुणाभिः श्यामश्यामतराभिर्घनघटाभिर्व्याप्तम् अन्तरिक्षम् स्यात्, काम मार्गो नितान्तभयङ्करो विषमो दुर्गमो वनसङ्कीर्णः पर्वतश्रेणीसमाकुलो नानाविघ्नबाधाभिर्ग्रस्यमानश्च भवेत् परं न स्वकीयाल्लक्ष्यमार्गान्मानवेन मनसेन भाव्यमित्येतद् उपदेष्टुमेव शिवराजविजय —'तावदकस्मादुत्थितो महान् झञ्झावातः, एकं साय समयप्रयुक्त स्वभावकृतोऽन्धकारः, स च द्विगुणितो मेघमालाभिः। वनाद् वनानि, शिखराच्छिखराणि, परश्शतान्तरस्थनी प्रचण्डेनैव कन्दरि-कन्दर-प्रतिध्वनिभिश्च गुञ्जितेन महाशब्देन पर्यपूर्यत साऽरण्यानी। परममुनाऽपि—"देहं वा पातयेयं कार्यं वा साधयेयम्" इति कृतप्रतिज्ञोऽसौ शिववीरचरो न निजकार्यान्निवर्तते इत्येतदवतरणमवतारयति मुदा।

शिवराजविजये हि दृश्यते तादृशान् भृत्यान् दिदृक्षते यादृशा हि भृत्याः शिवराजस्य सविधे बभूवुः। न शिवराजस्य भृत्याः स्वामिनो वञ्चनं जानन्ति स्म, न ते केनापि बृहत्तरेण, उत्कोचलोभेनैव गृह्यमाणा अभूवन्। ते सकला अपि विपदः सोढुं सदा सन्नद्धा अवाप्यन्त परं न ते आत्मानं कर्त्तव्यपथाद्भ्रंशयन्। शिवराजविजये राजकर्मचारिषु सेवकेषु राज्यप्रति देशप्रति सत्यमनुरागं, सत्यं कर्त्तव्यपरायणत्वं सञ्चारयितुमेव—'कथं विश्वासघातं स्वामिवञ्चनञ्च शिक्षयसि? ये उत्कोचलोभेन स्वामिनं वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति न वयं शिवगणास्तादृशाः" इत्यादिकानि वाक्यानि सन्निवेशयति। शिवराजविजयस्याख्यायिकाऽस्ति यद् देशस्य नेतृषु ते सर्वे गुणाः सन्ति वाञ्छनीया ये महाराजशिवे अशोभन्त। तद्गुणविशिष्टा एव देशस्य भारतस्य स्वतन्त्रतां पातुं प्रभवेयुः निजदेशस्य गौरवं वर्धयितुं समर्थाः स्युः। अतः स शिवस्य गुणवर्णनव्याजेन स्वदेशस्य शासनसूत्रधारिषु राजनीतिनिष्णातत्व-विद्याभिरुचित्व-रणचतुरत्व-दीनदुःखदावदहनत्व-स्वधर्मरक्षणसमग्रत्व-विलक्षणविचक्षणत्वादिगुणानां सन्निवेशो भवेदित्येतां स्वकामनां प्रकटयति। न स इत्यादि

कदाचिद् गिरिशिखराणि अवलोकयन् परिक्रमापरपादाहति-विच्छिन्न पाषाण-पट्टिका-परिष्कृत-वेदिकाया पर्यन्ते कश्चित् समयमतिवाहयाम्बभूव।"

अस्मिन् शिवराजविजये बहूनामलङ्काराणा प्रयोग कृतो दृश्यते। क्वचिदुपमा, क्वचिद् रूपकम्, क्वचिद् विरोधाभास, क्वचित् समासोक्ति, क्वचिच्च अन्येऽनेकेऽल ङ्कारा सचेतसा चेतासि चोरयन्त परिस्फुरन्ति।

'एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खचरचक्रस्य, कुण्डलमाख ण्डलदिश, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य" इत्यादौ म ला रूपकालङ्कार स्थितो मनोहरच्छटामावध्नन् विलोकितो भवति, "कर-कम्पित-कृपा-कृपण-कृपाणो महादेवमाराधयिषुस्तपस्विवरोऽर्जुन इव शान्तवीररस इवस्थात" इत्यत्र पूर्णोपमा स्वकीय सौन्दर्यं वितन्वन्ती दृष्टा जायते, "परिनश्च तस्यैव खर्वामप्यखर्वपराक्रमा श्यामामपि यशःसमूहधवलीकृतत्रिभुवना कुशासना श्रयामपि सुशासनाश्रयाम्" इत्यादौ विरोधाभासस्य विच्छित्ति साधु दृष्टिपथ मवतरति, 'धारिताकृतिरिव वीरता विग्रहिणीमिव धीरता" मित्यादावुत्प्रेक्षा परिस्पन्दमाना सती विलोक्यते, "तेषा चैकैकमन्तरा महाफला माकन्दद्रुमा, मध्ये मध्ये च विहितपार्श्वरम्भ पादपाश्लेषा मन्दमन्दमनिलालोला लता रमन्ती' त्यादौ समासोक्तिश्च स्वविलासेन बुधवृन्दस्य मनो हरन्ती वीक्ष्यते।

'पाथोधि पय पूर परिवर्ति परश्शतपोतस्थ सांयात्रिकसमूह-गेगीयमान कीर्ति चन्द्रिका चुलुकन चकोरीभूत कोङ्कण कल्याण खानदेशादि-महामण्डल प्रजागण" इत्येवविधानि दीर्घदीर्घतराणि समासाश्लेषितानि वाक्यान्येव न, शिवराजविजय उपहारीकृत्य कोविदकुल परिप्रीणात्यपि तु स "अभाग्य एष जन, अस्वायत्त हृदयम्, विगलित धैर्य्यम्, पराधीन चित्तम्, अस्थिर आत्मा, दुर्निवार प्रेमप्रवाह, दुरन्तोऽभिलाष, अप्रतिरोधा कर्मरेखा, तत् किमिव वच्मि? इत्यादिकानि सरलसरलतराणि लघुलघुतराणि वैदर्भीरीतिसमुल्लसितानि वाक्यानि चोपायनी कृत्य विद्वद्वर्गं नन्दयति।

शिवराजविजयो न केवल साहित्यिकान् ललितललिततरं नवनवकल्पनाक लितैर्नानाभावविभावितैर्वाक्यै सम्यक् मोदयतेऽपि तु स "धातु"क शास्त्रीय प्रामित पाण्डित्य चतर ततर मोमुधमान-नरीनृत्यमान-पोस्फुट्यमान तातप्यमान- रुरुदुष्टत् प्रातवीविशत् विधित्सु मिरनामु-श्ययाजियत अतापिपत चर्करीति वर्भत्ति-नह्रै तिप्रभृतिप्रचुरतरपदानि च प्रयुज्य वैयाकरणानामपि ससार साधु परितोषयति।

शिवराजविजयो हि नवनवाभूतपूर्वाश्रुतपूर्वपदानाञ्च निधिरस्ति। यानि पदानि विलोकयन्ताम्—मोरिचि, मोहरम, शमयादन, उष्ट्रा, अनगिरा, कावशासन, अष्टादश पालकी, मञ्जिनम्, गृद्धार, छुरिका, तुरङ्ग, आगनाम्न कण्डोल, पोटलिका, गड्गडा, फलिका च।

शिवराजविजये ये संवादा समुपस्थापिताः सन्ति तेऽपि सवादानुकूलत्वप्रयुक्तत्वात् रमणीयतां श्रयन्ति। तत्रैकोऽपि निभालनीयः—

महादेव—उद्वाहः कदा भविता ?

सन्यासी—श्वः।

महादेव—अत्र वरयात्रा-समयः कः ?

संन्या०—यामे कलामात्रे यामिन्याः।

महा०—कति मनुजा अनुमता नगराधिकारिभिः ?

संन्या०—शतसार्धमितिकाश्चिमत्।

महा०—भद्रम्, पत्रमपि मह्यं वाचयाम।

शिवराजविजये यत् किमपि कथितं तत्र सर्वत्र अमोघा ओजस्विता, चमत्कारकारिणी ऊर्जस्वलता, विचित्रैव वक्रोक्तिः, अद्भुतो भावाभिव्यञ्जनविधिश्च शोभन्ते। पाठकानां श्रोतॄणाञ्च मनांसि सर्वेभ्योऽप्यन्येभ्यः पदार्थेभ्यः प्रसभमाकृष्य शिवराजविजयस्य प्रभावपेशलानि गद्यानि स्वदिशाम्प्रति स्वाभिमतमार्गेण स्वच्छन्दमग्रतः परमसफलतापूर्वकं नेतुं तानि, सर्वथैव क्षमाणि भवन्ति। न कादम्बर्यां न वासवदत्तायां न दशकुमारचरितेऽपि सा भाव-प्रकटनप्रवीणता दृष्टिपथं याति या अत्र वीक्षिता भवति द्वित्राणामिह तस्या विद्युतो लोलालोकेन क्रियतां स्वजीवनं सार्थकम्—

(क) हा भारत ! किं लुण्टकैरेव भोक्ष्यसे ? हा वसुन्धरे ! किं दीनप्रजानां रक्तैरेव स्नास्यसि ? हा सनातनधर्म ! किं विलयमेव यास्यसि ? हा चातुर्वर्ण्य ! किं कथावशेषमेव भविष्यसि ?

(ख) ⋯⋯ अगणित-फणावलि फूत्कृतैरिव वीज्यमानो विमल-कमलोदरमोदर-सौन्दर्याभ्यां कमलकोमलकमला-करतलाभ्यां पादयोः पीड्यमानो निःशङ्कं तस्मिन्नेव कोमलतमतल्पे शेषे शेषे। तत् किं जगतः शेषे तव निद्रया भवितव्यम् ? ⋯ ⋯तत् किं गजोद्धार-धावन-स्थगितोऽसि ? यद्वा धावसि। विस्रावगद्गदनतवनवास-व्रीडितोऽसि ? यद्वा वनरसि।

न शिवराजविजयः पुरातनकथनप्रणालीमङ्गीकुरुते। अङ्गीकृतापि यदस्ति तदा सा नवीनायामेव शैल्यां परिणमय्य अवतारितास्ति। तत्र रूपशिल्पस्य सौष्ठवं बङ्किमचन्द्रकृतस्योपन्यासस्य सौष्ठवमनुहरति। बाणस्य गद्य-सौन्दर्यं तत्र भाति परं तदुपरि व्यासस्य मुद्रा स्पष्ट परिस्फुरति, तत्र दशकुमारस्य पदलालित्य विद्योतते परं न तत्पौराणिकतयालिङ्गितमस्ति। इतिहासकल्पनयोस्तत्र स मञ्जुलः सम्बन्धः संगुम्फितो यः संस्कृतसाहित्यस्य न पुरातने न चाभिनव एव साहित्ये विलोक्यते।

न शिवराजविजये लेखकतझ्जेन कापि अतिद्वयी कथा सृष्टा तत्र तु समाजगतस्यैव तस्य ज्योति पिण्डस्य मानवस्य चरित्रं चित्रितं यो विशङ्कटसङ्कटसङ्कुलेऽनेहसि भारतीय गौरवं गोपायाञ्चकार। तस्य मानवरत्नस्य चरित्रमञ्जीय नूनं व्यासमहाशयविर्जीवितस्य ता व्याख्यां वितनात यत्रादर्शमानवताया रूपं प्रत्यक्षीभवते। मन्ये, राष्ट्रियता शतशतस्वरैर्मानवं प्रमोदयन्ती सर्वत. रसा दिव्यामाभा विकिरति।

अहो, अम्बिकादत्तव्यासो, वस्तुनो महान् प्रतिभावान् विद्वान् कल्पनावान् उत्कृष्टराष्ट्रानुरागवान् अस्ति। तस्य देशभक्तिस्तस्य स्वसंस्कृतिविषयक प्रेम एकतस्तद्रचनात प्रस्फीभवत्यपरतस्तस्य रचनातस्तदीयमुत्कटं पाण्डित्य भाषाया उपरि महान् एकाधिकारो व्याकरणादिशास्त्रनिष्णातत्वादिकाश्च गुणा व्यक्ता भवन्ति। केन प्रकारेण तदीयेयं कृतिर्वर्णनीया स्याद् या वीरताया इतिहासोऽस्ति, या राष्ट्रप्रेम्णो मन्दाकिनी अस्ति, या नानारत्ना कलित राजभवनमस्ति, या चारुचारचरित्राणां चित्रशालास्ति, या हृदयहारिणा कोमलकान्तरसाश्लीनां विलासागारोऽस्ति।

स्वरचना प्रति, सत्यमेव, एष कविर्यत् "स्वर्गमाधरमाधुरीं निर्गुरयन् वाचां विलासो मम" इत्यभिदधौ। अन्ततो वयं—

"का द्राक्षारसमाधुरी मधु च किं क्षीरं च किं वामृतं
किं वाद्यक्वणनं च किं पिकवच किञ्चापि योषित् स्मितम्।
राष्ट्रप्रेममयी महोज्ज्वलगुणा वीरानुरागाम्बिका-
दत्तव्यासकवेर्गिरा यदि शिवा श्रोत्रद्वयं गाहते॥"

इत्येतेषु पदेषु निधाय नैजां नतिमिमां महनीयां कृतिम्प्रति, विरमाम।

—०—

## गीतिकाव्यम्

अस्ति गीतिकाव्य सुरसरस्वतीमातु परममृदुल शिरीषादपि पेलव मनोरम महत्त्म्। तन्मुक्तक प्रबन्धभेदेन द्विविधम्। यत् सन्दर्भानपेक्षि भवत् स्वयमरम-न्दद पूर्णता बिभ्रद् स्वविषयवस्तुना रसिकाना मनासि रञ्जयत्प्रमपेशल भवति तन्मुक्तकमिति[1] मञ्जया प्रथितम्। एतदीय प्रतिपद सरस भवति तदास्वादमात्रेण सहृदय हृदय मद परिप्लावयति। मुक्तककाव्येषु भर्तृहरे शतकत्रयममरुकस्य चामरुकशतक माघप्रतिकविकुलालङ्कारभूत पञ्चमधुरनायस्य सरस्वती-सौरभञ्च सुन्दरतमान्युत्तमानि मुक्तककायानि सन्ति। प्रबन्धकाव्येष्वेव रस-परिपोषमुपैतीत्येना धारणा वस्तुतो मुक्तकानि काव्यानि समूलमुन्मूलयन्ति। रस तत्र प्रतिपद्मुच्छलामवदनुभूयैव आनन्दवर्धन 'मुक्तकेषु हि प्रबन्धेषु इव रसबन्धाभिनिवेशिन कवयो दृश्यन्ते" इत्येतदाह।

यत्र किमपि मञ्ज कथित वा आख्यानक कस्यचन गेयचरितस्यैकदरिञ्जीवन गानुमुपादीयते तत्प्रबन्धात्मक गीतिकाव्यमिति स्मृतम्। मेघदूतमन्यानि च पवनदूत हंसदूतप्रभृतीनि काव्यानि उत्तमप्रबन्धगीतिकाव्यत्वेन गण्यन्ते।

गानिकाव्येषु कवय सर्वोत्तमयानि वृत्तानि च प्रयुञ्जाना प्रायेण प्राप्यन्ते ते तत्र सुकुमारान् भावान् तदनुरूपाणि च मधुरमधुरतराणि पदानि निबध्नन्ति। वर्णनाय च शृङ्गार-नीति-वैराग्य प्राकृतिकदृश्यसम्बन्धिनो विषयास्ते तत्र चिन्वन्ति। विप्रलम्भ शृङ्गार-करुण शान्तरसास्तत्र विशेषेण रमणीयतामरनुवाना दीपिता भवन्ति। हृदयपक्ष एव प्राधान्येन परिस्फुरन् सर्वत, कार्ये व्याप्तत समवाप्यते च तत्र।

प्रकृत्या अधीर कातर सुखाभिलाषश्च मानव। स आत्मान स्वजन पर वा विपन्नमार्तं दीन वीक्ष्य विषीदति नितराम्। न तस्य महो जायते स्वप्रियजन-विच्छेद। दुःखानि यदा तमभिभवन्ति क्लेशा यदा त क्लिश्नन्ति स रोदिति, सम्पद सुखानि स्वजनस्नेह प्रियजनसम्पर्कश्च प्रसादयति प्रमोदयति च। तत्रैवा

1 पूर्वापरनिरपेक्षेणापि हि यन रसचर्वणा क्रियते तदेव मुक्तकम्—ध्वन्यालोक

स हसति, क्रीडति, निषीदति, स्वपिति, विश्राम्यति, अत्ति, वक्ति च यत्र तदनु-कूला. स्थितय आसाद्यन्ते। मानवस्य एष स्वभाव एव गीतिकाव्ये कविना मधुर-मालिख्यते। कविप्रतिभाया. कमनीयं संस्पर्शमवाप्य मानवस्य वास्ता दुर्बलताः अपि आनन्दवर्षिण्यो भूत्वा भावुकाना पुर उपतिष्ठन्ते। ता कस्मिन्नपि मन-प्रमोदकरे रूपे परिणता भवन्त्य परिस्फुरन्ति। दु.खकरमपि मानवस्याख्यानं, विचित्रमेवैतत्, कविकल्पया सुखास्पद सञ्जायते। दु.खमपि तत्रास्य सुखत्वेना-नुभूयते।

गीतिकाव्येषु नारीप्रणयस्योदात्तता स्वीय मर्मभागमपि समुन्मीलयन्ती दृग्गोचरीभवति। तत्र बाह्यप्रकृतेराभ्यन्तरप्रकृतेश्च प्रभावोऽन्योन्यमनुगृह्णन् प्रकुल्लति। यथा चलचित्रालये चित्राणि दर्शकानां चेतांसि चोरयन्ति तथैवात्रापि गीतिकाव्ये प्राकृतिकानि दृश्यानि रसिकानां स्वान्तानि हरन्ति।

मुक्तकमपि गीतिकाव्यं लौकिक-धार्मिकभेदेन द्विविधतां भजति। लौकिकं हि मुक्तकं लोकविषयकैर्विधानैर्बन्धुर भवति, धार्मिकं विशिष्टानां देवताना स्तु-तिभि. सुन्दरम्। संस्कृतसाहित्ये चिरन्तनात् कालात् द्विविधयोरपि लौकिक-धार्मिकगीतिकाव्ययोः प्रणयन कुर्वन्त कवय. प्राप्यन्ते।

वैदिकसहितायामपि गीतिकाव्यस्य दिव्यैवाभा भाति। कवयस्तत एव वस्तुतो गीतिकाव्य-विरचनस्य शुभां प्रेरणामलभन्त। सहितासु उप-इन्द्र-विष्णु वरुण-मरुदादीनां देवानां हृदयहारिणी स्तुतीरधीत्य संश्रुत्य वा कवयोऽपि जगद्धरभट्ट-पण्डितराजजगन्नाथो-त्पलदेवप्रभृतयः स्वकीयानि गीतिकाव्यानि च देवस्तुतिपराणि प्राणैषु।

महर्षयो हि सत्यस्योपासका आसन्। ते तस्य सत्यस्य गवेषणाय सतत-मयतन्त यदीयया शक्त्या ब्रह्माण्डस्यापि सकलस्य सर्वेऽपि पदार्थाः स्व-स्व-क्रियासु संलग्ना. सन्ति। तदर्थं ते प्रतिपदार्थं ददृशुस्तत्र च प्राविविशु। प्रतिपदार्थ-स्याभ्यन्तरभागे प्रविष्टत्वात् तेषां, तेषु तेषा तादात्म्यमेव सञ्जातम्। स्वेच्छया स्वीकृत एव तेषामुत्सर्गस्तेषां गिरासु ज्ञानगरिमाण वर्णनमधुरिमाणश्च उद्वी-भवत्। श्रुतिमन्त्रेषु तत्तद्गुणवैशिष्ट्यस्य दर्शने कारणमिदमेव प्रतिभाति। तेषु मन्त्रेषु एतादृशा अपि भूयांसो मन्त्राः सन्ति यत्र महर्षीणां वृन्द स्वीयान् मनो-भिलषितानपि भावास्तीव्रानुभूतिपुरस्सरं वितन्वानमधिगम्यते। त एव मन्त्रा

धार्मिकगीतिका यत्त्वेनोद्गीता भवन्ति । केचनात्र मन्त्रा उद्ध्रियन्ते । येन वैदिक-गीतिमनोज्ञता दृष्टिपथेऽवतरितुमर्हेत्—

"अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥"

इत्येष मन्त्र इन्द्रस्तुतिपरकः । अत्र मातृगोचराद्विवर्तमानानां स्ववत्सदर्शनोत्सुकानां उच्चै राव विदधतीनां धावन्तीनां सौरभेयीणां 'वाश्रा इव धेनवः' इत्येतया पदपङ्क्त्या मनोहरं दृश्यञ्चोपस्थापयति । धेनुषु जलानामुपमितता च कियती प्रिया । ये हि भावा मानवमानसं कमपि शक्तिविशेषं स्तोतुं नुदन्ति ते भावास्तदा हृदये समुत्पद्यन्ते यदा शक्तिः स्वनैजस्विनया मानवमभिभावयति हृदये । वृष्टेस्तानि तानि लोकहितावहानि कार्याणि गहनविस्मयोत्पादनपूर्वकं स्वीयान् महनीयान् रामान् निदधति मानवस्याग्रे । स (मानवः) ततस्तां शक्तिं वर्षणकारिणीं स्तोतुमुपक्रमते । एष मन्त्रो यस्मादिन्द्रसूक्ताद् गृहीतः तदपि तत्कर्तुर्महिम्न प्रेरण्या प्रेर्यमाणाद् हृदयान्निर्गतमस्ति । एतादृशा मनोहरा अलङ्कारलसिता हृदयोद्गारा गीतिकाव्यतत्त्वयुक्ताः श्रुतिषु सन्ति सहस्रशः ।

औषसानि सूक्तानि नितरामेव गीतिकाव्यस्य ललितं रूपं सृजन्ति । तदस्याना मादकता मधुरता नितान्तं मनो हरति । अधिप्रभातमरुणिम्ना मण्डितं सुवर्णच्छायाऽऽद्युतिं प्राच्यं नभोमण्डलं पर्यवेक्ष्य कस्य न भावुकस्य हृदये कोमला भावनोदेति ? कविस्तच्छविनीक्षते प्रेम्णा । स तदभिगमनुपमायामुन्मज्जति निमज्जति च उषसोऽवदातद्युतिस्तस्य कवि हृदयमुद्बोधयति । उषा सुन्दरीव तस्य प्रतिभाति भावनापुञ्जमो वेगस्तथा वर्धते यत् स तस्यानामानं लोपयति । स कदाचित् उषसं कुमारीं कदापि प्रेयसीं कदापि मातरं मन्यते । भावनानां बलीयसा रंहसा स सानन्दमेव गातुमारभते—

"अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥"

हन्त, कवेर्हृदयमुर्मिः किं किमोल्लेखते । तद् उषःसुन्दरता तमिनयाभिव्यङ्क्ते नानालङ्काराणां विचार प्रसौति । शुभ्ररूपवती उषा मिरसासु सुन्दरीव नव मरसि अवतरति कदापि, भ्रातृविहीना भगिनीव कदापि सा दायभागनादिमदा पितरं भूयं निकषेपसरति, चारुतर दुकूलं वसाना प्रेमपाशेन पतिं वशीकर्तुकामा सौन्दर्याभिमानिनी कामिनीव प्रियतमस्य पुरः कदापि गच्छन्तीव विलोक्यते

